


॥ श्रीगणेशायनमः ॥

# सदाशिवभट्टयाम् ।



शेषंतदीशंचविनत्यलक्ष्मीमीशस्य प्रीत्याह्यचलोपियोऽभवत् ॥ लिखामिग्रन्थं निजबुद्धिपुष्टैयशिष्टार्थकं विवृत्तिसंग्रहंत्विमम् ॥ १ ॥

कारकविभक्ते र्बलवत्वाद्द्वितीयेति ॥ कुक्कुटांडसमासवत्स्त्रीप्रत्ययोत्पत्तेःपूर्वन्तद्धितः ततस्तुनल एकार्थीभावात् । शरदः कृतार्थंतेतिवत्सामान्येनपुंसकं वा। एतेन तद्धितान्तत्वेन गुणवचनत्वाबाभात्वतलोरित्यस्याप्राप्त्यापुंवत्वासंगतिरित्यपास्तं । न च स्वस्त्यादिसाहचर्यादित्यादिमाधवोक्तयुक्त्यापि निर्वाह इति वाच्यम् । रावणायनमस्कुर्यादिति भट्टिप्रयोगेद्वितीयाप्रसंगात् । नन्वासत्वार्थकस्वरादिपठितस्यसप्रयोगः । नमस्पुरसोरिति सत्वानापत्तेः तत्रजयमंगलानुरोधेनसविसर्गपाठकल्पनेपि स्वयंभुवेनमस्कृत्येत्यादौ समासानापत्तिर्दुष्परिहरा वस्तुतस्तु कर्मत्वमिहनविवक्ष्यते इति जयमङ्गलाशयः । अनुकूलयितुमित्यास्याध्याहारपरग्रन्थास्तूपायांतरपराइति बोध्यम् । एतेन फलाभावात्साहचर्यमिहन व्यवस्थापकमित्यपास्तम् । देवानां नमस्करोतीत्यस्य फलस्यसत्वादिति बोध्यम् । फलाभावादुपपदविभक्ते रित्येवनप्रवर्त्तत इत्यस्यवक्तुंशक्यत्वाच्च ।

केचित्तुसाहचर्यंनात्रनियामकम् । अन्यथा विनिगमनाविरहेणाऽजन्तत्वेनाऽक्षरसमाम्नायि कांतत्वेनवासादृश्यग्रहे देवेभ्योनमोऽत्रेत्यादावेव तदापत्यादेवेभ्योनम इत्यत्रानापत्याभाष्याद्याकरग्रन्थासंगतिरेव स्यात् । किञ्चनमोवरिव इति सूत्रेभाष्येनमस्यति देवानित्यत्र चतुर्थीमाशंक्योपपदविभक्तेरिति न्यायेनसमाहितम् । साहचर्येणद्योतकनमः शब्देचतुर्थ्यप्रवृत्तौक्यचः पूजार्थकत्वेननमसोद्योतकत्वेन तदप्राप्त्योभयमप्यसंगतं स्यादित्याहुः । तिरस्कृत्येत्यर्थ इति । फलितार्थप्रदर्शनमिदमिति पाठकाः । एवं चतिरस्कारार्थस्य परिभवतेरेव विचारार्थकत्वमिति नासंगतिरिति भावः । इदमेवयुक्तम् । केचित्तुवैयधिकरण्येनान्वये तत्संबन्धिधातोरित्यर्थः । तदर्थप्रकृतिकण्यन्तधातोरिति यावत् । यद्वाकोशात्तिरस्कारार्थस्य परिभवतेर्धातोर्विचारार्थकत्वेविषयत्वापत्त्यर्थकत्वे । तदुत्तरणिचातदनुकूलकृत्यभिधानाद्विषयत्वापादनरूपविचारार्थकत्वपरिभावयतेरित्यर्थः एतेन यस्यकोशात्तिरस्कारार्थकत्वं परिभवतेर्नतस्यविचारार्थकत्वम् । यस्य भावयतेस्तत्वंनतस्यकोशात्तत्वमित्युभयमसङ्गतमित्यपास्तम् । यत्तुपरिभवतेस्तिरोभवनंपर्यंतस्यतिरस्करणमर्थ इति भूप्राप्ताविल्यस्य चौरादिकस्येदं रूपमितिवापरिभाव्येत्यस्यतिरस्कृत्येतिविवरणंसम्यगेवेति तन्न । घयन्तनामार्थानुशासकवक्ष्यमाणकोशसंचारस्यासङ्गति प्रसङ्गात् । ममतुपरिभाव्येत्यादेरयमर्थः । कोशातिरस्कारार्थस्य परिभावशब्दस्य धातोःपरिभाव्येत्यत्रणिलोपेधातुत्ववतः । एतदुक्तिस्तु अनेकार्थत्वेसाध-

कस्य धातुत्वरूपस्य संपत्तिसूचनायेत्यन्ये । वस्तुतः तिरस्कारार्थस्य परिभावशब्दस्यावयवोयोधातुस्तस्येति वैयधिकरण्ये नव्याख्येयम् । अन्यथा तु न संभवः । उपसर्गसमानाकारत्वेनपरेः पृथक्करणाद्विशिष्टस्य धातुत्वाभावात् । अत एव धातोरनेकार्थत्वादेवपरिभवतेस्तिरस्कारातिरिक्तार्थकत्वादेववासंङ्गच्छते । तन्मात्रार्थकत्वेतुव्यावर्त्याभावेनावज्ञाने इति विफलमेवस्यादिति न सङ्गच्छेतेति केचित् । तिरस्कारार्थस्यधातोर्विचारार्थत्वेपीति । इदं चणिन्द्योतक इति पक्षाभिप्रायेणेतिपाठकाः । हेतुमतीति सूत्रस्थोत्तरग्रन्थविरोधात् द्योतकत्वपक्षरूपकुत्सितयष्टिव्यवष्टभ्यसमर्थनं तुनरोचतेऽस्माकमिति मन्यते । भाविनोपीति । अत्रग्रन्थस्येति शेषः । इयमित्युक्तिः कौमुदीगतलिङ्गारोपात् । उपमायालिङ्गभेदजदुष्टत्वनिरासायारोपः । यद्वाभाविनोप्यर्थस्यान्यत्रबुध्याविषयीकरणस्यदृष्टत्वाद्भाविसूत्रविवृत्तेरियमित्यनेनपरामर्शः । वृत्तिपरिच्छेदकत्वेनेति । संज्ञाशब्दनिष्ठवृत्तिपरिच्छेदकत्वेनेत्यर्थः । अतस्तस्यापत्यंकर्तरिकृदित्यादीनां नसंज्ञासूत्रत्वम् । अणादीनांजातिशब्दत्वात् । एतेन तत्र संज्ञासूत्रत्वातिव्याप्तिनिरासायसंज्ञास्वरूपावच्छिन्नेत्यादिकिरयन्तोमिश्रासमाहिताः । अणटित्यादिष्वव्याप्तेश्च । स्वौजसमौडित्यादीनामपीति । अस्यविध्यर्थत्वेबहूनिफलान्यूह्यानि । अविवक्षयानतत्कार्यमिति । नन्वेकपद इत्यस्यराजीयतीत्यादिसिद्धयेपदत्वाभाववदुत्तरखण्डकसमुदायत्वमिति परिष्करिष्यमाणत्वेनप्रकृतेनतदाक्रान्तत्वेनतस्यानित्यत्वेनाविवक्षोक्त्यसंगतिरि-

ति वाच्यम् । पदत्वेसतितत्वमिति तदर्थात् । प्रकृतेचसमु-
दायस्यातथात्वात् । वस्तुतस्तु अनुकरणत्वेनसौत्रत्वाच्चेतिम-
ध्यमणिन्यायेनपूर्वोत्तरयोरन्वयः अनुकरणत्वेनेत्यस्यनिपाता-
नुकरणत्वेनेत्यर्थः । संहिताया अविवक्षयातद्धारणंतुनयुक्तम् ।
एकसूत्रेतदभावात् । तदुक्तमिकोगुणेति सूत्रेउद्योते एकयो-
गत्वंचद्वयोस्संहितापाठमात्रेणेति अतएवेकोयणऽचीत्यत्रसौत्र-
त्वादेवङ्मुद्धारयिष्यतेग्रन्थकृता। यत्तुक्रमबोधकत्वेनवर्णबोध-
कत्वान्नकारप्राप्तिरिति तन्न समूहस्यतत्वेपि प्रत्येकंतत्वाऽन-
पायादितिजरन्त आहुः सौत्रेति औपदेशिकश्रुतित्वस्यस्वयमेव-
वक्ष्यमाणत्वेन छन्दस्त्वादित्येव वक्तव्येछन्दोवत्सूत्रेत्यऽतिदे-
शप्रवर्तकं सौत्रत्वादितिकुतउक्तमिति तदाशयःसएवप्रष्टव्यः
अन्येतुसौत्राणामिदंसौत्रं पाणिनिसूत्रमूलभूतं तदुपकारकंवा-
छन्दइत्यर्थः तत्वात्सौत्रत्वाच्छन्दस्त्वादितियावदतएवाण ऽपि-
सफलोतिदेशप्रवृत्तावभिप्रेतायान्तु सूत्रत्वस्यैवतत् प्रवृत्तिप्रयो-
जकत्वेन तत्वादित्येववदेत् नाणमित्याविष्कुर्वंतेतदाशयम् ।
इदं पञ्चम्यन्तमपि तृतीयांतवत् गुणेत्वन्याय्येति न्यायात्प्रा-
तिपदिकत्वप्रतिबन्धकद्वारा एवविभक्त्युत्पत्तिप्रतिबन्धकम् ।
एतेनातिदेशाल्लुगिति वक्तव्येशाब्दबाधोक्तिरसंगतेत्यपास्तम्
जातलुकिअनुपस्थऽन्वाख्यानेपिवा शाब्दद्वयानुसंधानस्यावश्य-
कत्वेनप्रत्युततवैव गौरवम् । छन्दसिसर्वविधीनांवैकल्पिकत्वे-
नाऽभावकल्पनेवाबाधाऽभावेनाऽसङ्गतेरभावश्च एतेन प्रतिसू-
त्रंप्रातिपदिकत्वस्य वक्ष्यमाणत्वे नतदवयवत्वेनलुकः सिध्या-
सौत्रत्वादऽणविफलइत्यपि निरस्तंजस्त्वाद्यऽभावायसूत्रप्रकृ-

तिकसुत्रऽनुत्पन्नमेतदादरस्यावश्यकत्वाच्च किंन्त्वलुकिपूर्वभागस्य-
पदत्वेनियमेनप्रत्येकं सूत्रस्यप्रातिपदिकत्वानापत्त्याणादेरित्सं-
ज्ञानापत्तिरुपायान्तरेणपरिहरणीयास्यात् यत्तुप्रातिपदिकांतत्व-
संपत्त्याणादेरित्संज्ञार्थैप्रत्येकंसूत्रोपदेशस्यतात्पर्यंस्यावश्यकत्वेपि
वर्णोपदेशे आचार्यतात्पर्यकल्पनेनमानम् । एवं वचनाद्यौधा-
दिभ्य इवात्रापिनतदुत्पत्तिः तस्यैव चकारप्रत्ययोपिनेति सौ-
त्रत्वबाहुलकत्वाश्रयणंविफलमिति तन्न वर्णानामुपदेशः लका
रोपदेश इत्यादि भाष्योक्तिस्वारस्यैव तत्रमानत्वादिति सुधि-
योविभावयन्तु इति केचित् ॥ बाहुलकादिति । यत्विति ॥ एवं
च पुनःशक्तिग्रहाभावेपि संध्युपजीव्यानिश्चयेनाविकृतरू-
पाकारादिषु गृहीताऽजादिपदशक्तिः संधिकार्येकृतेऽविकृते-
षु विकृतेषु वेतिसंदेहाद्विरुध्येत इति भाव इति व्याच-
क्षते । केचित्तूपजीव्यस्य संधिकारणीभूताऽजादिपदशक्ति-
ग्रहस्यविरोधादित्यर्थः । विरोधाभावादिति ॥ अविकृतेषु
शतिग्रहमुपजीव्यजातस्य विकृतेषु शक्तिग्राहकत्वेसस्यादिति
भावः ॥ ननूपजीव्यस्याविकृतत्वरूपविशेषण अकारादिव-
र्णरूपविशेष्यरूपस्य शक्तिग्रहोपजीव्यस्येत्यर्थः ॥ विरोधात्
कृतेसंधौसन्निपातविघातः स्पष्टएव सन्निपातप्रतियोगिनोरू-
पादानग्रहत्यागस्य वक्ष्यमाणत्वादेवं च कैयटः सम्यगेवे-
तिचेन्न ॥ पूर्वापरीभावांशे भाष्यादितस्त्यागेपि अन्यत्रत्यागे-
मानाभावादिति भाव इति व्याचक्षते निर्णयसंभवादिति ।
यत्वेतत्प्रतीकमुपादायानेन शास्त्रप्रारम्भे एवं संदेहोत्पादकश-
ब्दप्रयोगः स्वाकौशलोल्लापकत्वादाचार्येणापराकृत इति संहि-

ताया अविवक्षायावीजप्रदर्शनमिदं कैयटोपाध्यायानामिति सूचयन्ति अन्यथा निर्णयादित्येववदेदिति व्याचक्षते ॥ तत्राचार्यपदेनमहेश्वरमभिप्रैतिउतपाणिनिः नाद्यः तस्य चतुर्दशसूत्रोप्रारम्भकत्वेपि यावत् शास्त्रप्रारम्भकत्वाभावेन शास्त्रे त्यादिग्रन्थासामंजस्यं स्यात् नान्त्यः मूलाभावादिति वक्तव्यम् सामर्थ्ययोगादिति प्रयोजनसद्भावात् हेतोरित्यर्थः । यत्त्वत्रल्यब्लोपे पञ्चमीसामर्थ्यमुक्तं विहायेत्यर्थ इति भट्टाःतत्कथं संगच्छते किञ्चतस्य किंफलमितिते एव प्रष्टव्याः न निष्प्रयोजनत्वरूपानर्थक्येति । निष्प्रयोजनत्वरूपानर्थक्याभावेसतीत्यर्थः ॥ तद्गुणानर्थक्यप्रत्याख्यनभाष्येणन विरोधोऽभिधेयपरत्वादित्यर्थः तृतीयां तत्वेतूभयोरप्यानर्थक्यप्रतिपादकत्वे नासंगतौ हेतुत्वानुपपत्तिः वेदपारम्पर्य्येणेति परंपरैवपारंपर्यगुरुशिष्यपरंपरेति यावत् वेदसंबन्धिनीयासातयास्मर्य्यमाणम् वेदस्ययेध्यापकाः येचाध्येतारस्तैरधीयमानत्वादध्याप्यमानत्वाच्चास्यापि वेदत्वमिति भावः ॥ अन्त्यवर्णचतुर्दशेति अत्रान्त्याः वर्णाश्चतुर्दशयस्मिन् समूहरूपेतत्णादिलान्तानुबन्धरूपंसमासान्तः सम्यक् यथोचितं उपतत्समीपेकृत्वा आसंमतात्कथिता इत्यर्थ इत्यन्तंभट्टा आहुः अक्षरसमाम्नायमित्याचक्षते इति केचित्तुतं खल्विममक्षरसमाम्नयं ब्रह्मराशिरिति हेतोर्नभुक्त्वाननक्तं प्रब्रूयादिति ऋषयोब्राह्मणेभ्य आचक्षते इति शाकटापनोप्याहेत्यन्वयः आहेति त्वन्मते इवाध्याह्रियन्तेकीर्तयिष्यन्तीत्यादौ शताक्षींनुमः अपर्णांनुम इति वाक्यैकदेशस्यशताक्षीमपर्णामित्यस्यानुकरणान्नानुपपत्तिः यथा

श्रुतेऋषय इत्यस्याऽव्यवहितेप्रोवाचेत्यत्रान्वयोऽपि दुर्वच इति व्याचक्षते परेत्विति ॥ केचित्तु ननु ज्ञानलाघवाभावान्नतदै-यर्थ्यमत आह किंचास्येति अत्रहि प्रत्याहारज्ञानस्यतवाऽप्याश्यकत्वान्नतल्लाघवमिति भावः । लाघवमिति यण्वत इन्यत्रय-वतः इकोयणित्यादौय इकोचिइणोयण्यइणः यणादिपरं यादि-परमित्यादिषु इत्यादिन्यासेनलाघवमिति भावः । यत्रत्विग्यणः यणोमयेत्यादौ यस्येत्यादिन्यासेनलाघवं ॥ तत्र तत्रास्तुणका-रेणैव । अत एव बहुष्वित्युक्तं नसर्वेषु इति एतेन प्रत्युतगौरव-मित्यपास्तम् ननुणोच्चारणमयोपधायोचिङेर्थ इत्यादौ दोषाभा-वाययकारेणाकारेणन प्रत्याहार इति ज्ञापनार्थम् । ययणोः पर्यायत्वाल्लाघवाभावश्चेत्यत आह किञ्चानुबन्धेति हेतो-रव्यापकत्वेति अनुबन्धाः अच्प्रत्याहारग्रहणगृह्यमाणताशू-न्याः प्रत्याहारसिद्धेः प्राक्लुप्यमानत्वादित्यनुमितौ हेतोः प-क्षतावच्छेदकावच्छिन्नवृतित्वरूपव्यापकत्वाभावापत्तेरित्यर्थः । तदुपपादयति तवेत्यादिलोपयोरभावेत्यन्तेन ममत्वकारेऽनुब-न्धत्वस्यैवाभावेननतत्वापत्तिः नन्वक्षुप्रत्याहारार्थी अनुबन्धा इति भाष्यादच्बोधकसूत्रस्यानुबन्धत्वंपक्षतावच्छेदकंनतुके-वलानुबन्धत्वमऽकारेचतदऽभावान्नाव्यापकत्वंहेतोः किंचप्र-त्याहारसिद्धेः प्रागित्यस्यकोऽर्थः यावत् प्रत्याहारसिद्धेः प्रा-ग्लुप्यमानत्वमर्थः उतयत्प्रत्याहारे यदऽनुबन्धग्रह आपद्यते-तत्प्रत्याहारसिद्धेः प्रागित्यर्थः नाद्यः हल्प्रत्याहारसिद्धेः प्रा-गचादेरपि लुप्यमानत्वाभावात् द्वितीयेतुभाष्येऽजित्युक्त्या-विशिष्यैव पक्षतावच्छेदकस्य वाच्यतयालणित्यक्त्याका-

रेतदभावान्नतदापत्तिरतोलक्ष्यासिद्धिमाह प्रत्याहारेत्यादिना-पत्तिश्चेत्यन्तेन चकारोऽव्यापकत्वापत्तेः समुच्चायकः तवादि-तृतीयान्तस्यग्रन्थस्यचमध्यमणिन्यायेन पूर्वोक्तापत्तावुत्तरयोश्च-तयोरन्वयः वस्तुतोहेतुद्वयाऽव्यापकत्वापत्तिरित्यर्थः शेषंपूर्ववत् नन्वनुनासिकत्वसमानाधिकरणजातिनिर्देश उतह्रस्वत्वसमा-नाधिकरणजातेस्तत्राद्ये आह अनुनासिकेति अन्त्य आह सोस्तीति वस्तुतोगुणाभेदकत्वस्यऽव्यापकजातिनिर्देशस्यचभग-वदभिमतत्वेन सर्वत्रदोष इति बोध्यम् । एवंच सोस्यादिरि-तिनिर्देशरूपाचारोऽत्रसंभवति तदपेक्षयेष्टं व्यापकत्वं तृतीय-स्यभज्येतेति नायमित्संज्ञक इति सिद्धम् ॥ अनित्संज्ञ-कत्वमेवद्रढयति अत एवेति वार्तिकार्थस्तुगृह्यन्ते एभिस्तानि-ग्रहणानि अचांग्रहणानिग्राहकाणीति यावत् तेषुअइउणादि-सूत्रेषु अधिकरणेसप्तमी प्रत्याहारेनुबन्धानां अजादिसंज्ञार्थं-मनुबध्यमानानांणादीनामित्यर्थः निमितात्कर्मयोगेतिसप्तमी फलंहितत्रनिमित्तम् प्रत्याहारस्यफलत्वंचतत्करणस्य तत्सिद्धि-विषयेच्छाधीनत्वात् कर्मयोगस्तुप्रत्याहारस्याजादिसंज्ञारूपस्य समूहस्यावयवेनानुबन्धेनकर्मणाणादि नासमवायरूपयोगस-त्वात् बोध्यइति परात इत्यतः प्राक्प्रत्याहारेवर्णसमाम्नाये इत्यपपाठः पौनरुक्त्यापत्तेर्भाष्येऽभावाच्च नहल्प्रत्याहारेति त्वन्मतेतुसकलप्रत्याहारमूलभूतत्वात् हलंशेएवतदाशंकास-माधानौ चित्येनतदसंगतिः स्पष्टैव नन्विदंभाष्यंहशादिषु टादिग्रहणानापादनादुपलक्षणतयात्वयापि नेयम् अजित्यु-क्तिस्तु आपाद्यमानग्रहणकानांप्राथम्यादितिनास्माकं प्रतिकू-

लमित्याशङ्कते । न च हशादीति । आदिनेण् । एवञ्चरा-
मष्टीकते अठूस्वित्यत्रोत्वषत्वेस्याताामिति भावः । तदघटितेति
हलघटितेत्यर्थः । यद्वातेनोच्चारणार्थवर्णेनघटिताः सहितास्तद-
घटिताहादिशब्दास्तेषां प्रत्याहारेतद्बोधक इत्यर्थः । इणादेरपि-
हादि बोधकत्वेनतत्वापत्त्यातत्रापिनतेषांग्रहणम् । अजादीनां-
तुनतत्वमिति न तत्राऽयं समाधिरेतदर्थमेव तदघटितेत्यु-
क्तम् । अन्यथा प्रत्याहारेत्येववदेत् न च पुनःपुनरिति भाष्योक्ते-
स्तच्चारितार्थ्यम् । यथा पूर्वाचार्यगृहीतांत्यानुबन्धानामक्लिष्टस्य
स्पष्टत्वोपपत्तिस्तयाहयवरेत्याद्यु पपत्तौयाद्यकारोच्चारणवैयर्थ्या-
त् अत एव पुनःपुनरितिवीप्सितम् ननु तदुच्चारणेनोच्चारणा-
र्थवर्णरहितानां तादृशप्रत्याहारेन ग्रहणमिति ज्ञापनेममापि
नप्रतिकूलमत आह तद्विषयेति प्रयोगाभावएव भाष्यादिता-
त्पर्यं नतूपलक्षणत्वेइति भावः । ननु राजाहसखिभ्यष्टजत-
ष्टावित्यादिप्रयोगादुपलक्षणत्व एव भाष्यतात्पर्यमतोबाधका-
भावेपि साधकाभावान्नानुनासिकत्वमित्याशयेनोपसंहरति त-
स्मादिति । वस्तुतस्तु ननु साजात्येनटस्य प्राधान्याद्ग्रहणं
स्यादित्याशङ्कते न च हशेति अनभिधानाच्चेति चेनेतएवारु-
चेर्लौपश्चवलवत्वे इति हेत्वन्तरसमुच्चयः पूर्वोक्तारुच्चेराह । त-
स्मादिति इत्यर्थः । यद्वाहशादिग्रहणेटादिग्रहणकथनेत्यस्य
संग्रहायकौस्तुभोक्तमेव व्याख्यानमुचितं वार्तिकस्यभाष्येऽक्षिव
त्यप्य जादिशब्देष्वित्यर्थकसूत्रचतुष्टयोपादानमपि चतुर्दश-
सूत्र्याउपलक्षणम् अक्षुहलषुचसमाधिवैषम्यंकुल इति शङ्काया-
स्तवाऽपिदुःसमाधेयत्वेन तदुपलक्षणत्वेचतुर्णामेव ग्रहणंकुत

इत्यादि मांप्रतिमाचोदयोः ।अनुबन्धानांग्रहणस्यानिष्टत्वेतान्
मैत्रोच्चोदोरिति शंकानिरासाय भाष्येप्रत्याहारार्था इति एवं
चानुनासिकत्वं प्रतिजानतोनशंकापरभाष्यविरोधः तृतीयहेतो-
रव्याकत्वापत्तिस्तुतवापिदुष्परिहरेति हल्प्रत्याहारसमकाल-
मेव वलादि प्रत्याहारसिद्धोप्रतिबंधकाभावेन वलादिप्रत्याहा-
रेषु टकारादि प्रवेशस्यदुर्वारत्वादित्याशयेनशंकते नन्वेति ह-
शादीत्यादिनावलादीनां टग्रहणमुपलक्षणंयादेः उभयमपि-
दृढयति नपुनरित्यादिना तृतीयहेतोर्व्यापकत्वसमर्थयतः
कौस्तुभकृतोपीदमावश्यकमेवेतिभावः । इत्याशयेनशङ्कितेदू-
षणान्तरमाह हकारादिषु। पुनःपुनरित्यादिनावक्तुंशक्यत्वादि-
त्यस्याग्रे लकारस्येणादिसंज्ञानापत्तेरनुनासिकत्वप्रतिज्ञानैष्फ-
ल्यापत्तेश्चेति भावः। अप्रामाणिकमिति। अनङादिषु प्रयोगसम-
वायित्वभियाऽनुनासिकत्वाङ्गीकारेप्यावश्यकेन सोस्येत्यादि-
निर्देशेनप्रत्याहारबोध्यत्ववारणेनेहतत्त्वेमानाभावइति । अत
एव अइउण्सूत्रे उद्योतेविधेयविषये उच्चारणार्थस्याननुनासि-
कत्वमावश्यकमित्युक्तमिति भाव इतिदिगित्याहुः । तुल्यजा-
तीयेति। ननु तुल्यजातीयेत्यत्रकिंत्वेनसाजात्यम् विवक्षितम् ।
अज्झल्त्वाभ्यामिति तुनयुक्तम् । अन्योऽन्याश्रयापत्तेः साजा-
त्येसतितेसंज्ञे तयोश्चसत्योःसाजात्यमितिचेच्छृणु । औकार-
वृत्त्यच्त्वाव्याप्यधर्मानवच्छिन्नत्वेनाच्यच्त्वाव्याप्येण्त्वादि-
मादायासंभववारणायाद्यम् । तद्वृत्त्यक्त्वादिमादायतद्वार-
णायद्वितीयम् । हकारवृत्तिहल्त्वाव्याप्यधर्मानवच्छिन्नत्वे-
नहलितत्।तदव्याप्याद्त्वादिमादायतद्वृत्तियण्त्वादिमादा-

यन्नतद्वारणायोभयम् । अज्झल्पदाभ्यांस्वरव्यंजनयोर्विवक्षणा
च्चेत्याहुर्नविभक्ताविन्यादेरिति आदिनोपदेशेजित्यस्यस्वपूर्व-
स्यसंग्रहः । हलन्त्यमित्येतद्वाक्यार्थजिज्ञासायामुपस्थितपूर्वोत्तर
सूत्रयोःसार्थक्यसंपादकेवाक्यार्थे निष्पन्नेपश्चाद्धलपदार्थः क
इति विशेषजिज्ञासाया मादिरन्त्येनेत्येतद्वाक्यार्थायावृत्तिरिति
भावः प्रकृतसूत्रस्थभाष्यमपीहानुकूलम् । अन्येतु प्रथममादिर-
न्त्येनेत्येतद्वाक्यर्थजिज्ञासायामुपसंजातविरोधिन्यायेन कृत्रिम-
त्वज्ञानाभावेन कृत्रिमाकृत्रिमेत्यस्याप्रवृत्त्याच्चहलिति सूत्रे-
न्त्यमिदित्यर्थे ततोनविभक्तावित्यादिवैयर्थ्यानुसंधाने आवृ-
त्त्याऽर्थान्तरस्य युक्तत्वादिदमसत् । भाष्यन्त्वेकदेश्युक्तमेवे-
त्याहुः । दशसूत्रावृत्ताविति । अन्यथा हकारादेः संज्ञाउत
अकारादेरितिदुर्निश्चेयं स्यादिति भावः । रुप्रभृताविति । अ-
शोकवनिकान्यायेनैतदुक्तिः ज्ञापकादिनानिवारणेतुतुरुस्तुश-
म्येत्यादिज्ञापकैरयमपिव्यावर्त्यतेत्याहुः । मनोव्यापारगौरव-
मिति । नन्वत्र किंगौरवं योगविभागपृयुक्तंतुन आवृत्तिंकुर्व-
तात्वयापि वाक्यर्थद्वयस्वीकारात् नियमपृयुक्तंतुहल् पदाकर-
णेननिमातव्यम् ज्ञापकंत्वावृत्तिसत्वेनविभक्तौत्याद्याश्रयणो-
यमेवेतिनतत् कृतमपितर्कितन्यासेऽन्योऽन्याश्रयशंकैवनोदय-
त इति चेत्सत्यम् अनन्तरन्यायवाधेयोगविभागसामर्थ्याश्र-
यणेनसत्वात् । तस्मात् अपाणिनोयदोषादुष्टोयंन्यास इति
बोध्यम् । मध्यमोवर्ण इति । वृद्धिगुणादिसंज्ञास्विवसंज्ञात्वा-
वगतिः सामानाधिकरण्यात् तथाच मध्यमोवर्ण अन्त्येनस-
हादीत्संज्ञकोभवतीत्यर्थः । रूपसिद्धिस्त्वाएतइत्यत्रैङोतिपर-

रूपं कृत्वौमाङोश्चेति पररूपकरणेनबोध्या अतएवाङन्तरूढौ-
तुनमानमिति नन्वावृत्तौयन्मानंतदेवमानंतत्रे ति वाच्यम् ।
शंकापरभाष्यादितस्तदभावानुमितेः इत्यूह्यमिति । यत्त्वल्पू-
करणे द्विवचनेनैवनिर्देष्टव्यंस्यादिति पाठकस्तन्न नपुंसकमन-
पुंसकेनेत्येकवचनम् । तस्याप्येकशेषस्यान्याय्यत्वात् । स्पष्टं
चेदंप्रकृतसूत्रेकैयट एव । नन्वेवमपवादबोधात्पूर्वमुत्सर्गवा-
क्यस्यलक्ष्यसंस्कारकत्वोपपत्तावुदासीनविषय इवापवादविषये-
पि प्रवृत्त्यापत्तौपश्चादुक्तवन्तम्प्रतिब्रूयान्माभुक्था इति तेन
किंकृतं स्यादितिस्थानेंतरतमसूत्रभाष्योक्तन्यायबोधितापवा-
दशास्त्रवैयर्थ्यापत्तिमूलकेन प्रातिपदिकार्थसूत्रभाष्यपठितेन-
पूर्वमित्यादि न्यायेनोत्सर्गवाक्यार्थ बोधात्पूर्वमपवादवाक्यार्थ
बोधस्यावश्यकत्वसूचनेन प्रागुक्तरीत्यासुप्तिङ्निष्पत्त्यभावे-
नान्योऽन्याश्रयस्तदवस्थएवात आह । पूर्वंह्यपवादेत्यादि इति
वाक्यस्यैवापवादशास्त्रस्येति।वाक्यस्यैवापवादशास्त्रस्य वैयर्थ्या-
पत्त्याच्चापवादशास्त्रपर्य्यालोचनेनेत्येवपाठ इत्यन्ये न्यायाऽनङ्गी-
कारेपीति ननूकलुगादिस्थले तथासुवचत्वेपि तस्यलोपइति
विषयेनैवं वक्तुंशक्याइति दोष एवेत्याशंक्येदसुलभमिति दि-
गिति। दिगर्थस्तु तुस्मभिन्नाहलइत इति प्रथमवाक्यार्थेन-
पादीनामित्त्वंततोविभक्तिपदार्थनिश्चये विभक्तिस्थतुस्मभिन्ना-
हलइत इति द्वितीयवाक्यार्थेनाविभक्तिस्थतुस्मानामित्त्वमिति
नन्वेवं नाज्झलावित्यत्रापि आक्षरसमाम्नायिका अचोहलश्चमि-
थोनसवर्णा इति । प्रथमवाक्यार्थेप्यणुदित्सूत्रबोधनान्तरम-
चस्तद्गृहीताश्च हलभिर्मिथोनसवर्णाइति द्वितीयोवाक्यार्थः ।

स्यादेव तथाच्चाकारप्रश्लेषोऽव्यर्थः वाक्यापरिसमाप्तिप्रतिपादकभाष्यासंगतिश्चेति चेन्न । नविभक्ताविल्यादौ विभक्तिग्रहणसामर्थ्यात् । द्वितीयवाक्यार्थाङ्गीकारेप्यन्यत्र तदङ्गीकारेमानाभावात् स्पष्टाचेयंरीतिः प्रकृतसूत्रेशब्दरत्ने यथासंख्यसूत्रसामर्थ्येन तत्र तथाङ्गीकारेप्यत्रतथाकल्पनेमानाभावादित्यादिना नन्वेवमपि हलन्त्यमित्यस्य बोधकाले उपदेशेऽजितिनाज्झलावित्यनयोर्बोधाभावेनाणुदिदित्यस्य वाक्यार्थज्ञानेनोदितः सवर्णग्राहकत्वाभावान्नविभक्ताविल्यतु शब्दस्यतवर्गबोधकत्वाभावेन तद्ज्ञानासम्भवाद्विभक्तिस्थनकारस्येत्वापत्तिः पकारस्येवदुर्वारा । तुशब्दस्तुतिथोरिति वदुच्चारणार्थोकारेण तकारमात्रबोधक इत्येवस्यादिति चेन्न परस्मिन्नित्यादिनिर्देशैरिहत्यहल्पदस्य नकारभिन्नतत्परत्वनिश्चयात् एवं सतिवर्गग्रहणव्यर्थमिति चेदस्तु तथा नाज्झलावित्येतस्य प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकत्वमिति मतेतुशब्दस्योदित्संज्ञकत्वमितिमतेच उदितः सवर्णग्राहकत्वस्य पूर्वमपिसम्भवेनादोषाच्च मतान्तरेपिलोपादिनेवजातनिवृत्तेङ्गीकाराच्च नविभेत्यत्रतुलुप्तनिर्दिष्टोनकार इत्यस्यापि वक्तुंशक्यत्वाच्च आदिरन्त्येनोभयोपादानेतु एतदग्रेनदोषोलोके इति पाठः प्रतीतिर्लक्षणावश्यकत्वेहेतुः लक्षणस्यानापत्तौहेतुत्वबोधकःसोन्त्यइतीति । इतेतिकिमिति । अस्यचतुर्दशसूत्र्येकवाक्यतयातत्सूत्रान्त्यस्य ग्रहणेनतस्येत्वस्यैव सत्वादिति प्रश्नः । माभूदिति । तदेकवाक्यत्वेपि सूत्रान्त्यस्यैवग्रहणेमानाभावेन विवक्षितसमुदायान्त्यत्वस्यणादावपिसत्वम् । परस्मिन्सतीत्यादिलक्षणमपि विवक्षा-

निबन्धनम्। अतएवेगादि प्रत्याहारसिद्धिः। अन्यथा तत्तत्सूत्रा-
देरेव ग्रहणेतदसिद्धिः स्पष्टैव। एतेनपूर्वस्यदीर्घोण इत्यादिज्ञाप-
कार्थे न प्रत्याहारस्तदवधिकानामेव ग्रहणेसिद्धेऽन्त्यपदसाम-
र्थ्यात् सूत्रान्त्यगृहणेनसिद्धेइतेतिसुत्यजम्। एवंह्यन्योऽन्याश्र-
यश्चनेत्यपरंलाघवमित्यपास्तम्। एवं चेगृह्स्व इत्यादिज्ञापका-
र्थोवधिकस्तदवधिकानामेव पूर्वेषामाक्षेपेसिद्धे आदिगृहणसा-
मर्थ्यात्सूत्रादेरेवगृहणापत्त्येगाद्यसिद्धि प्रसङ्गात्। ज्ञापकात्सू-
त्रावयव प्रत्याख्यानेबहूपल्लवापत्तेश्च। सूत्रेषु। वर्णसमाम्नायसू-
त्रेषु। तदभावादिति। लोपस्यसामर्थ्यादभावे फलाभावात् संज्ञा-
पिनेत्यर्थः यत्तुशक्तिगृहात् पूर्वमर्थवत्वाभावेन प्रातिपादिक-
त्वाभावात् व्यवसितान्त्यत्वाभावेन संज्ञाप्राप्तिरेवनेति। तन्न।
यत्सतिप्रातिपदिकत्वेपरिष्कृतार्थवत्वम्भावितत्र संज्ञेतितद-
र्थात्। अन्यथाराम इत्यादावपि सतिप्रातिपदिकत्वेपरिष्कृतार्थ-
वत्वमित्यात्माश्रयः स्यात्। आदिरन्त्येनेतिशक्तिग्राहकप्रवृत्ति-
स्तुन फलम्। इकादिषु कादेरित्वेपि चतुर्दशसूत्रीसम्बन्धिविव-
क्षितान्त्यत्वाभावेनेदन्त्यसदृशेनेत्यर्थावश्यकतया संज्ञाविरहे-
पि तत्प्रवृत्तेरित्याह। अन्त्येनेत्यस्येदन्त्येनेति ननु ततत्सूत्रेषु
लोपाभावस्यसामर्थ्यात् कल्पनापेक्षयाचतुर्दशसूत्र्यामेवोच्चारणा-
सामर्थ्यात्तदभावः कल्पताम्। एवं ह्यन्तपदेलक्षणाश्रयणंन ह-
लि अकारगृहाभावायावश्यकाच्चारात्तेषां प्रत्याहारवाच्यतापिने-
ति चेन्न। व्यक्तिपक्षेऋलक् सूत्रस्थस्येगादिशब्दस्थस्य कृत्स्न-
स्यभेदात्तथार्थावश्यकत्वेन तदेकवाक्यतयाजातिपक्षेपि तथैवौ-
चितत्वात्। तथासतिलोपश्च बलबत्तरइति भाष्यासंगतिप्रसङ्गश्च

तदेतदाह व्यक्तीति। नन्विणादिप्रत्याहारेजादीनां ग्रहणंमाभू-
दिति कथमुक्त मृकारादीति वक्तव्यम् । अत आहानीत्यन्येव-
तारयन्ति। हलन्त्यम् सिद्धत्वादिति अलोन्त्यात् हलोऽनन्तराः
तत्पुरुषः समानाधिकरणमिति कृत्पितोपितिकृतीत्यादाविति
भावः इत्संज्ञायाः परित्राणेतिपंचमीसमासः नान्तरीयेति अ-
न्यनिष्पादकतयानिष्पाद्यत्वेनेत्यर्थः।उच्चारणेपीति शेषःतेनेति
अध्याहारेणेत्यर्थः । आद्योच्चारणकालइत्संज्ञाभवनमित्यर्थेतुन
स्यात् । तत्रार्थेबाधश्च । तत्कालात्पूर्वमनभिव्यक्त्या तत्काल
इत्संज्ञायादुर्वचत्वात्। नाज्झलावितिसूत्रभाष्यबिरुद्धत्वाच्च। त-
दव्यवधानेति यथोद्देशइदम्। अनुबन्धविनिर्मुक्तस्यैव पदार्थो-
पस्थितिरित्यर्थः। गुरुकुलवत्समासः । नन्वेवान्त्यस्य लोपेनतत्
शक्त्यातदुपस्थिति र्वाच्येतितस्यैवार्थवत्वात् ततोविभक्त्युत्प-
त्तिरुचिता। अनुबन्धस्तुतदगूं वाच्योऽत आह धुडितीति । तत्र
संज्ञायामपिलोपोनउच्चारणसामर्थ्यात् । अन्यथा स्वरूपप्रतिप-
त्तिरेवन स्यादिति भावः वैयाकरणेति व्याकरणशब्दाद्विकारे-
ऽनुदातादेश्चेत्यञि आद्युदात्तवैय्याकरणशब्देञ्चित इत्यन्तो-
दातत्वापत्तिरित्यर्थः । यद्यपोत्वेपि प्रत्याहारसिद्धिरूपफल-
सत्वेनानर्थक्याभावात्तदुपस्थाप्येनतत्कार्यमितिसमाधानंवक्तुं
शक्यं तथापि न्याय्यसमाधिमाह । तत्वाभावेति । प्राति-
पदिकान्तत्वात्तुनतत्वं । यत्र संज्ञातत्रफलाभावेन तद्विषये-
त्संज्ञाशास्त्रस्य वाक्यस्यानुपप्लवात् । धुडादौतुतत्तदनुबन्ध-
सामर्थ्याद्वाक्यमुपप्लवते । इति तत् सामर्थ्यादुपस्थाप्येका-
र्यमिति बोध्यम् । नविभक्ताविलयस्यानर्थक्यं परिहरन्नुपजनि-

ष्यमाणेति न्यायमूलकमर्थमाह। विभक्त्यादीति। आदिनाप्रत्ययपरिग्रहः यत्रतुसुङस्योरौद्सुपोर्न विभक्तौ त्यस्यनप्राप्तिस्तत्रत्वनुबन्धविनिर्मुक्तस्यैव विभक्त्यादिसंज्ञाः पूर्वमित्संज्ञाया अप्रवृत्तौवोजाभावादिति बोध्यम्। अतएवेति पदार्थोपस्थितेरनुबन्धविनिर्मुक्तत्वादेवेत्यर्थः। अन्यथा तदानीमनण्त्वात् आशङ्कासमाधानयोरसंगतिः स्पष्टैव। अप्रत्यय इत्यस्य आदेशादुपलक्षकत्वादेवाह अप्रत्यय। इत्यनेनेति अनवयवाइति। उपस्थापकानवयवाइत्यर्थः। कदाचित्त्र तत्रेतितदुपस्थाप्ये इत्यर्थः। यथा वृश्चत्यादो चकारादिः सुवृडादो संयोगान्तलोपेनापहारादुक्तं कदाचिदिति। नदोषइति।इत्वाभावरूपइत्यर्थः। सर्वादेशत्वाभावरूपश्चसः डादिव्यतिरिक्तइत्यर्थः। तत्रसर्वादेशत्वं तुप्रश्ले-षणैव॥ एकान्तत्व इवानेकान्तत्वेपि यन्निष्ठव्यवसितत्वमादायेत्संज्ञातत्कार्यं तत्रैवेत्यङ्गीकारान्नत्ववैयर्थ्यमत आह।तस्यलोपइति नकारेत्संज्ञकइति। नकारेत्संज्ञकबोध्यस्तदभिन्नइत्यर्थः एवमग्रे पि प्रकृतसूत्रेति व्याख्येयत्वेन प्रकरणान्तोपदेशपदलाभाव धिभूतोपदेशोऽजितीत्यर्थ इत्याहुः। अन्येत्वनुवर्त्तमानेशतृशानचाविति पुनस्तौग्रहणेनलटस्थानिकत्वादिरूपधर्मसम्बन्धत्यागवत् सौत्रेत्संज्ञकत्वरूपधर्मसम्बन्धस्यापि त्यागात्सानुबन्धयोरेवपरामर्शः। तदुक्तं वार्त्तिककृता तौवचनमसंसगार्थमिति भाष्यकृतापि तथैव व्याख्यातम्।अतएवकैयटेनापि शतृशानचोरूपमात्रंपरामृश्यतइति लट्स्थानिकत्वादिधर्मासम्बन्धयोरपि संज्ञाभवतीत्यर्थ इतिवदताऽऽदिशब्दउपातः। सत्शब्देनतयोर्विधानानन्तर अनुबन्धानामित्संज्ञाभवत्येवेत्यलम्। एवंक्तक्त-

वतू निष्टेत्यादावपि न दोषः। अनुबन्धविनिर्मुक्तस्यैवोपस्थितिरिति नियमस्याविधेयत्वेनोपस्थितप्रत्ययाद्यनुबन्धविषय एवत्वाकारेणश्रुतनिष्ठासंज्ञासम्बन्धस्याश्रुतेत्संज्ञासम्बन्धादन्तरङ्गत्वात् प्राबल्येनचानुबन्धविशिष्टस्यैव संज्ञाविधानात्।अतएव सुब्विभक्त्यादिसंज्ञासूत्रान्तरगतानामेवेति प्रागुक्तम् संज्ञाविषयेसर्वत्रैवमेवेति नदोषलेशशङ्कापि स्यादेषदोषइति न्यायोऽपिविषमः। अनुत्पन्नस्यसन आदेशाविधानानुपपत्त्या वाक्यभेदेसति प्रथमवाक्येनोत्पन्नस्यसनः प्राप्ते त्संज्ञाद्वितीयवाक्यविहितादेशं न प्रतीक्षतइति पूर्वपक्षिणोक्तं वाक्यभेदेगमकाभावंसनासनिविधायोपदेशपदाननुवृत्तिमभिप्रेत्यचसिद्धान्तिनानानुत्पन्ने सनिप्रकृत्याभवितव्यं । यदाचोत्पन्नःसन् तदाकृतसामर्थ्यात् । पञ्चमीति प्रक्लृप्तिर्नभविष्यतीत्युक्तं ॥ तथाच तत्र वाक्यभेदसत्वाद्विधेयत्वेनोपस्थितप्रत्ययविषयेत्संज्ञयादेश प्रतीक्ष्यमाणाभावेपि श्रौतनिष्ठासंज्ञासंबन्धमन्तरङ्गमित्संज्ञाम्प्रतीक्षते। तद्भाष्यस्यैकदेश्युक्तित्वाच्च ॥ ननु कार्यकाल एकवाक्यतयाविधानाद्विधेयत्वेनोपदेशत्वमेवक्तक्तवत्वोरिति वाच्यम् ॥ यथोद्देशेतदभावादिति । पक्षद्वयेपि वाक्यैकवाक्यतयाविधेयत्वाभावाच्च । निपातनादित्वकल्पनन्तु तादृशवचनकल्पनाद्गुरु । अगतिकगतिश्च ॥ य एवतुनेत्वालाभादित्याहुः। भगवताकृतमिति । एवंच भावेघञातथार्थोक्तिरयुक्तेति भावः । न तु बाहुलकाश्रयणमेव दोष इति तदेकदेश्युक्तिरेवात आह । किंचेतिय एवतुनापित्वालाभादिति पाठः विचारणीयः भावेति । करणसाधनानुवृत्तौतुविहि-

तस्यापि शासनकरणत्वेन तत्स्यादपीति भावः । विहितेति । उपस्थापकस्योपदेशेविद्यमानत्वेऽपि प्रक्रियावाक्यसमवायिनस्त-त्वाभावादिति भावः। ननूपस्थापक एवसंज्ञालोपयोः प्रवृत्त्या-निरनुबन्धकस्यैव प्रयोगसमवायित्वमिति न दोषोत आह । परस्येति । एतेन विहितेपरस्यासत्वेनकादेरन्त्यत्वात् हेतुसा-ध्येपित इत्यपास्तम् । सामर्थ्येनेति ॥ आदेरपिव्यपदेशिव-त्वात्तत्वमेवेतिन तत्व्यावृत्तये । इदमेवाभिप्रेत्यसर्वोपि हल्-तन्तंसमुदायं प्रत्यन्त इत्युक्तं भाष्ये । ननुश्वन्नित्यादिप्राति-पदिकव्यावृत्त्यानानुवृत्तिवैयर्थ्यमत आह ॥ अतएवेति ॥ अनुत्थानेति। एवं मन्यते तत्स्यभावघञन्तत्वआद्योच्चारणे वि-द्यमानमन्त्यमित्याद्यर्थं उच्चारणस्यान्त्यमिति प्रत्यासत्तेराश्रयि-तुमशक्यत्वात् यत्किञ्चित् समुदायान्त्यस्यापि प्राप्नोतीत्युक्ति-ष्टतएवतत् । शास्त्रपरत्वेन प्रत्यासत्याशास्त्रान्त्यस्यैव स्यादि-त्यनुत्थितिरिति । धातुत्वादिनेति । शास्त्रकृतातेन तत्वेनवो-धितत्वादित्यर्थः । पचादौचान्तस्यैव तत्वेनचान्त्यस्य तात्पर्य-स्य तत्रैवसत्वात् । तात्पर्यग्रहेवीजं तुथमुप्रत्यय उकारः ननुव्यव-स्थितपक्षेप्रयोजनदातृभाष्यन्तत्रैव प्रतिकूलकम् । अनुत्तरार्थत्वे-हि तत्रैवक्षोदं कृत्वानकर्तव्यमित्येवब्रूयादिति । ममतूत्तरा-र्थमावश्यकतया लाघवाभावेनक्षोदोनकृत इति । साधकमेवा-तोऽननुवृत्तौ साधकान्तरमाह । एवं चेत्यादिनास्य अनुत्थान-मेवस्यादित्यन्तेन फलाभावेति अत्रयथा फलाभावस्तथाविव-रणतोऽवसेयः ॥ अवसेव्यतेचास्माभिः कालेन स्थेग्रहणेति । गणादावपठितेत्यर्थः । उपदेशशब्दइति । बहुव्रीहिरयं उपदे-

शः कर्त्तव्यइति शब्दइत्यर्थः । नन्वेवमिति तस्यभावसाधनत-
यातथार्थकत्वाभाव इत्यर्थः । अन्यथाचरमेणपौनरुक्त्यापत्तिः ।
इत्युच्यमानेति । इत्यनुवर्त्यविधीयमान इत्यर्थः । तत्रसूत्रद्वय
यादावित्यादिनावहोर्लोपेति यत्रेति पूर्वेणसमानाधिकरणम् ।
तत्रखलुस्थानिनिर्देहेतुमाहोयेति । एवंच षष्ठीप्रकृलृप्तेः प्रागेवप-
रत्वान्तरङ्गत्वेनोपदेशोत्तरकालं सूत्रएवेत्संज्ञोच्चारितस्य कार्य-
न्तुप्रयोगएवेति निरनुबन्धकस्यैव प्रत्ययत्वेनविधानान्त्यश-
ब्दएवतत्कार्यभागितितदादेशस्यकुतः सानुबन्धकतेतिभावः ।
लक्ष्येति । शानच्चिन्त्यस्थानिवत्त्वेवक्ष्यमाणेत्यादिलक्ष्यासिद्धेरि-
त्यर्थः लटःसद्इतिविहितत्वेनाद्योच्चारणाभावात् । एकाचइति
उपदेशेऽत्वत इत्यादाविति पाठः । आदेचइत्यपपाठः तस्य तत्र-
कर्म्मव्युत्पन्नत्वात् । यणापत्तिरिति शाकलेननिर्देशोपपत्तिरस्तु-
नभस्त्वात् नन्वेवं यस्येतिलोपापत्तिर्वाच्येति चेन्न परत्वप्रत्या-
हारग्रहणसामर्थ्याभ्यांकेण इति ह्रस्वेनबाधात् । अनन्तरम-
पिन सकृद्गताविति न्यायात् । इदंचनासाशब्दात्केऽभिप्रेते-
णास्तृशब्द इत्येतस्माण्वुलितुनशङ्काकलंकलेशोऽप्यत एवाह्रे-
तिभाव इति वस्तुतः कोसौप्रत्याहारोयत्रेतो नग्रहणमित्यवत-
रणं बोध्यम् । एकद्वित्रिमात्रेति एकाद्वे तिस्रश्च मात्रायस्य
तस्यभावस्तत्वमिति वागदृषदप्रियइति वदनेकपदोबहुव्रीहिः ।
एवमुत्तरत्राप्येतेनैकादिदशान्तानां द्वन्द्वै कशेषयोरनभिधा-
नस्य वक्ष्यमाणत्वेने द्वम्ऽसङ्गतमित्यपास्तम् । व्याख्यानेति ।
अत्रादौ नह्नु तदीर्घौ अन्त्येनदीर्घः ओमभ्यादान इत्यारम्भा-
दञ्झलोऽप्रतिषेध इतिवत् ह्रस्वसंज्ञादीर्घप्लुतयोरपि प्रा-

प्नोतीति भाष्येउक्तन्तद्रीत्याशङ्कते नन्विति । अन्यथोच्चारित-स्यैव प्रत्यायकत्वात् सूत्ररीत्याभाष्यरीत्याचमिथः समभिव्या-हारात् व्याप्यजातिनिर्द्देशसत्वेन शंकैवनोदयति । उअजिति समाहारद्वन्द्वःभिन्नेचपदे। असन्धिस्तुशाकलेनासंदेहार्थः दीर्घ-पाठेतु इत्यर्थकमित्यदोषादिति पाठः । अदसोसेरित्यत्र वक्ष्य-माणरीत्यानिर्द्देशोपपत्तिः असंधिःसंहिताविवक्षयाशाकल्यह्र-स्वेनेदानीं दीर्घस्यापिविधानाद्वा इदानीह्रस्वशासनानामकिं-चित् करत्वंतुभाष्य एवस्पष्टम् । तुगापत्तिरिति नचैतदऽभावे-नित्यविधिर्दुर्वारः सकृद्गतिन्यायाभिप्रायकतयाभाष्यप्रयो-जनं कैयटोक्तन्तुदूषितमन्यत्रेति वाच्यम् । प्राप्तविभाषाणां-निषेधरूपतयानिषेधानांबलीयस्त्वान्नित्यविधेरपि निषिद्धत्वात् नचानन्तरस्येति न्यायेनह्रस्वप्रयुक्तस्यननिषेध इति वाच्यम् । योगविभागोमास्तुच्छेत्यत्रैव दीर्घादित्यस्यापकर्षोस्तु उभय-त्रविभाषात्वेयमिति भगवतोभिप्रायात् कैयटमतेदूषणान्तरं-स्फोटयितुमाह।अन्तरङ्गे ति। स्पष्टश्चे दंभाष्ये उच्चैरि। तेषांतत्वेपि क्षत्यऽभावादाह हल्स्वरेति तेषांतत्वेहिस्वरविधायकैरूलांस्था-ने हलोविधीयेरन्निति दोषोवाच्यः स एवनतत्स्थानिनोऽभावा त् अचोपिनानन्तरतमत्वात् । यद्यपि तेषांतत्वेयतोनाव इति ज्ञापकंनसंभवति तथापीयम्वाचनिक्यावश्यकीति भावः । वि-रोधादिति तथाच पूर्वत्रधर्म्मिपरयोरपि इहलक्षणयाधर्म्मपरतेति भावः।इतरेतरद्वन्द्वे पिवर्णिपदार्थयोः प्रकारत्वेतद्धर्म्मयोरपि प्र-कारतेति तत्समूहेभावप्रत्ययेनमूले उदात्तानुदात्तत्वेइत्यस्योप-पत्तिः अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढइति भाष्यतोविशिष्टरू-

ढेरेवलाभादाह। ह्रस्वपदेइति। मूलंबहुव्रीहिरिति भावः । स्वशा-
स्त्रे ति। रूपतइति रूपोऽर्थःस्वशास्त्रसंकेतितः मात्राकालिकाज्रू-
पोऽर्थोयस्मिन्मात्राकालिकाजऽर्द्धरूपेऽर्थेतेना बोधकंतस्याबो-
धकमिति यावत् कर्मणोहेतुत्वविवक्षया तृतीयेत्यन्ये केचित्तु-
तादृशभाष्यानुपालंभात् प्रमाणमेवह्रस्वस्यादावितिह्रस्वुक्ते श्च
मूलेतत्पुरुषेपिनबाधकम् । वस्तुतस्त्वस्यप्रमेयपरत्वेपि जा-
नुदघ्नमिति वन्मात्रच्त्तस्यलुकिदीर्घस्वरितादिसंग्रहे भाष्ययो-
जनेन्द्रकैय्यटादीनांरूढिस्वीकारोमुधेतिप्राहुः । उदात्तस्वरितयो-
रिति यद्यप्यस्याद्युदात्तत्वंग्रामादित्वाद्भवति । एवञ्चोदात्ता-
नुदात्तेति । स्वरितेतत्स्थानिकत्वाद्यणउदात्तस्वरितयोरित्यका-
रस्य स्वरितत्वेपि स्वरविधौव्यञ्जनस्याविद्यमानत्वेनोदात्तेति
स्वरितत्वेपि वातस्याऽसिद्धत्वेनशेषनिघाताप्रवृत्त्यास्वरितोवे-
त्यस्याऽप्राप्त्यापूर्वस्वरितासिद्धिरत्रपक्षे तथापि उञ्छादित्वा-
दन्तोदात्तत्वमेवहि शब्दस्य तथाच यणउदात्तस्थानिकत्वा-
त्तस्य स्वरितत्वे स्वरितोवेति प्रवृत्त्येष्टसिद्धिः । इति समास-
इति इदं वृत्तिकाराद्यऽनुरोधेन भाष्येतुकरणेल्युट्कुक्कुटाण्ड-
वत् बहुव्रीहिश्चसमास इत्युक्तम् । बहुव्रीहिस्तत्पुरुषोलघुरित्य
भिप्रायोमूलस्येत्याहुः । ह्रस्वत्वादीनामिति । स्वसमानाधिक-
रणोदात्तत्वापेक्षयेत्यर्थः । कत्वादीनांचेति । दीर्घत्वादिसमा-
नाधिकरणोदात्तत्वाद्यऽपेक्षयेत्यर्थः । अतएवाष्टादशधाभिन्ना-
मवर्णस्यप्रतिपत्तिं वक्ष्यामीति पस्पशास्थान्तिमभाष्यं सङ्गच्छते
ऋकारघटितइति । स एवेत्यर्थः । तत्सत्वेतद्घटितमपि प्र-
युञ्जीतयथाश्रुतं तुनसङ्गतम् । किंचलतिलवेत्यस्य प्रत्याख्या-

नमपि तदऽभावएवसंगच्छते अन्यथा लकारवदीषत् स्पृष्टम-
पेक्ष्यलकारवतो विवृतस्यान्तरतमत्वात् स एव स्यादिति ।
तदऽसंगतिःस्पष्टैव तुल्यास्येति तुल्याविति । अतएव प्रत्ये-
कं साम्यमादायनसंज्ञा अकःसवर्ण इत्यादौ सवर्णग्रहणाच्च ।
ननु वर्गोपयोगित्वेन हेतुनालालादेर्व्यावृतावपि प्रयत्नस्यतत्वे-
नाव्यवर्तनादेवेत्यसङ्गतमत आह । पृथगुपेति शब्दोनित्य-
इति नयेऽस्यैवसम्भवादाह जनकेति अन्येतु ननुयत्नप्रयत्नश-
ब्दयोः प्रयत्नमात्रेरूढत्वात् । पर्यायत्वेनलाघवाद्यत्ने ति वाच्ये
प्रोपादानमधिकसंग्रहार्थमित्यस्य वक्तुमशक्यत्वेन रूढियोगे-
ति न्यायेनयत्नसामान्यग्रहणमेव स्यादत आह । जनकेति
तथाच प्रयत्नो जनकत्वगृह्यैयत्नसामान्यस्य जन्यप्राग्वर्तित्वरू-
पजनकत्वबाधात् योगार्थाएवाश्रीयन्तेभूमौपङ्कजमुत्पन्नमिति
यथेत्याहुः । निर्देशइति इदंच्चविवृतत्वव्याप्यानां संज्ञाऽनुपयु-
क्तत्वमिति सूत्ररीत्योक्तम् सत्तत्रयत्नाइति भाष्यरीत्याप्याह ।
अतएवैचोरिति एकारैकारयोर्मिथ इत्यर्थः । कण्ठादीनामेवेति ।
वायुसंयोगादीनामेवेति तु न तद्वानासावाप्रादय इत्यादिनिर्दे-
शात् । अन्येतुप्रयत्नसमभिव्याहारादास्य भवमपिकरणमेव
तत्वंचकण्ठादेरेवनवायुसंयोगस्य व्यापारवत्वरूपकरणत्वाभा-
वात् । कण्ठादेस्तुसंयोगएवस इत्याहुः एतेन वायुसंयोगव्युदा-
सायज्ञापकान्तरस्य तवाप्यावश्यकत्वेतदुक्तत्वैव तेनतदभि-
न्नानां यावतामास्यभवानांगृहणबोधनेनेष्टसिद्धौ प्रयत्नगृहणं
व्यर्थमेवेत्यपास्तम् । तत्रैव दोषादिति केचित्तु । आस्यशब्देना-
स्य भवत्वव्याप्यजातिविशेषवद्याक्तौल्यं विवक्षितमिति । साह-

चर्याद्यत्नशब्देनापियत्नत्वव्याप्य जातिविशेषवद्यावत्तौल्यं विवक्षितमिति साहचर्याद्यत्नशब्देनापि यत्नत्वव्याप्यजातिविशेषवद्यावतौल्यविवक्षणेनादोषात्स्पष्टार्थं प्रोपादानमित्याहुः। नन्वनेनापूर्वंकादीनां कण्ठस्थानत्वे तुल्यस्थानत्वात् । सवर्णपदशक्तिग्राहकशब्दस्यतदग्राहकत्वमणुदित्सूत्रेण बोधनीयमिति कथमत्रवाक्येकुशब्देन पञ्चानामुपस्थितिस्तत्राह। तत्रादिति साहचर्यात् उपक्रान्ताकारसमभिव्याहारात्। यथाश्रुतंतुनयुक्तमिति स्पष्टमेव ध्मायेतें उच्चार्य्येतें अतएवनासिकायाःस्थानत्वादेवत्वर्णजनकेति तदऽभिव्यक्तिजनकेत्यर्थः। संयोगाधारेति। वर्णाभिव्यक्त्यवच्छेदकत्वावच्छिन्नतादृशसंयोगाधारतायास्तात्वादावेवसत्वान्नसंयोगस्योभयनिष्ठत्वेपि वर्णजनकवायौस्थानत्वव्यवहारातिप्रसंगःरूपसादृश्येनेति एतदर्थमेव पूर्वंवाह्यलक्षणेमध्यमविशेषणद्वयम्। अन्यथास्वरूपभेदायाद्यस्य वाह्यत्वायांत्यस्यावश्यकत्वेपि तद्वैफल्यं स्पष्टमेव अतएवङादीनांस्थानत्वादेव अन्यथास्थानिनीत्यस्यासंगतिः स्पष्टैव। वाह्यप्रयत्नत्वोक्त्येति अन्यथा आस्यग्रहणव्यावर्त्यानांसावर्ण्याऽनुपयुक्तानां प्रदर्शनप्रक्रमेणतत्कथनवैयर्थ्यापत्तिः। अगृहणबोधनेति।नासिकायाआस्यपदेनगृहेतु तत्रत्यप्रयत्नस्याऽस्य पदव्यावर्तकत्वोक्तिरसंगतास्यात् तत्रत्यप्रयत्नत्वागृहस्तुअधिकोगुण इत्युक्त्यागुणानामभेदकत्वेनेति वक्ष्यमाणरीत्याबोध्यः । इदंचनासिकास्यान्तर्गतेतिमतेमणिमंत्रादिन्यायेन तदगृहेप्रतिबन्धकत्वं भाष्यस्योक्तम् वस्तुतः सातद्बाह्यैवेति निरूपितंविस्तरादुद्योतेततएवबोध्यं तदाह । वदतामिति बहुवचनेनास्यैव भाष्य-

संनतत्वंध्वनयति भिन्नस्थानेति प्रयत्नात्पृथक्स्थानस्यास्यप- देनकथनेत्यर्थः । एतेनभिन्नस्थानकथनस्यान्तरतम्यपरोक्षो- पयोगित्वादनुभवसिद्धानुवादरूपत्वाच्च कलादिदोषज्ञानोप- योगित्वाच्चेदमसदित्यपास्तम् । ऐचःसर्वस्येति एच्इति स्व- ऽप पाठः हसेइत्यादावननुनासिकत्वप्रतिज्ञानात् । यत्तुपरिनि- ष्टिते प्रयोगेइति शेषकृत्वाहसे इत्यादौ प्रक्रियायान्तत्सत्वेपि नक्षतिरित्याहुरतएवादर्शनादित्युक्तन्तत्वसत्त्वादिति । तन्न सम्यक् हसेहसने इत्यादीनां अपरिनिष्टितत्वस्यवक्तु- मशक्यत्वेनभुक्तेपीति न्यायावतारात् । ह्रस्वलकारस्यापि गम्लादावेवसम्भवेनप्लुतेस्युत्तरगृन्थासामञ्जस्याच्च अत्रपाठे- सर्वस्येत्युक्तिस्तुप्रयोगभेदाभिप्रायेण लकारस्यचेति चेनदी- र्घप्लुत ऌकारयोःसंगृहःस्पष्टंत्वेदंस्थानेऽन्तरतमसूत्र उद्योते सेधं सिद्धस्यगतिरेतच्छ्रद्धालुभिरादर्त्तव्या तत्वंतुगृन्थकृद्दे द अनुवादेति एवंचात्रतत्प्रवृत्तावपि अनुभवेनस्थानैक्यमादा- यासमकालयोरपि संज्ञास्यादेवेति वैफल्यादप्रवृत्तिः । अपूर्व- बोधकत्वेत्वस्यसङ्कोचेतत्प्रवृत्तिरेवफलं स्यादिति भावः । एतेनवृद्धिर्यस्या अकुहेत्यादावनुवादेपि तत्प्रवृत्त्यंगीकारात् चिन्त्यमित्यपास्तम् । तेभ्योपि विवृतावेङावित्यादि वाक्या- न्तरेणएचां विवृततरत्वाद्युक्तेरन्याचामोषद्विवृतत्वसमानाधि- करणेषत्स्पृष्टत्वधर्मस्य प्रसक्तस्यनिषेधमुखेनपूर्ववाक्यविहित- विवृतत्त्वबोध एवतात्पर्य्यादाह । रूपविवृतत्वेति । अपूर्वबोध- ने हिस्वराणां विवृतमित्यने नपौनरुक्त्यंस्यादित्याहुः । यण- स्त्वित वाक्येस्पृष्टा इत्यस्य सम्बन्धात्तेषामोषद्विवृत्ततत्वंशा-

ह्रस्पर्शाऽपेक्षयेषत्स्पृष्टत्वमाथं समाजगुस्तन्नत् । सर्वमाह ।
इत्यनेनेत्यादिना शलामीषदिति। ईषत्त्वमजपेक्षया । अत्रेति
तेषांभेदेन कथने सतीत्यर्थः । एवञ्चसावर्ण्येऽस्य हेतुत्वंफ-
लितम् । अत्र प्रयत्ने ति प्रयत्नभेदादक्षरसमाम्नायस्याकारेणा-
ग्रहादच्त्वाभावान्नदीर्घोऽत एवगुणोपिनेति भावः। समासस्तु-
दीर्घश्चाऽप्लुतयोरभावइति । प्रयत्नभेदस्याद्दीर्घयोरभाव इति
भावः । प्रयोज्यत्वंषष्ठ्यर्थः । सिद्धान्तभूतजातिनिर्देशे सं-
वृत्ता वर्णस्याच्त्वेसंहिताऽविवक्षयागुणोनेतिदीर्घस्तु अङ्गद्व-
यविरहान्न एकसूत्रेसंहितानियमेतूह्येइत्येलुगि[illegible]सुपांसुलुगितिङ
सः सुरेव तस्यरुत्वयत्वलोपाः । तदसिद्धत्वान्नगुणादि उ-
त्वन्तुनातीति विवृतनिर्देशादिति बोध्यम् । पूर्वत्रघत्वेत्या-
दि अयंभावः । गोदुहमदितिस्थिते पदान्तेघत्वस्य जश्त्वा-
ऽपवादत्वात्ततः प्राग्घत्वम् । औपदेशिकझषन्तेभुदादौ यु-
गपत् प्रवृत्त्यान्तरङ्गजश्त्वमपवाध्यनारितार्थ्यात् । भष्त्वात्
पूर्वमिण्ङ्ङीनामिति न्यायेनधातूपसर्गयोः कार्यस्येव पूर्वो-
त्पन्ननिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वम् । अनुनासिकस्त्वपर-
निमित्तकत्वेनान्तरङ्गत्वात् सिद्धान्तेतु जश्त्वाऽनुनासिकत्वयो-
रसिद्धत्वात् भष्भावेऽनुनासिकस्यासिद्धत्वाज्जश्त्वेऽनुनासिकइ-
ति प्रक्रिया। घा देरसिद्धत्वाद्धत्वस्यत्वप्राप्तिरेवेति। घत्वेकृतइति।
उक्तरीत्याघत्वेति । जश्त्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वेप्यऽनु-
नासिकस्य परत्वेपिवत्वस्यककुद्मान् तडित्वानित्यत्वसत्वात्त-
दप्राप्तियोग्येन्चारितार्थ्येन वेदेऽनुनासिकाभावपक्षे त्वनेनाप-
वादत्वाभावेपि प्रतिपदोक्तत्वादनुनासिकतोऽपरनिमितकत्वे-

नान्तरङ्गत्वाद्योभाभ्यां पूर्वत्वस्यप्रवृत्तिरिति भावः। प्रत्याहारग्रहणसामर्थ्यादित्यन्ये। उक्ताशयमजानानस्तुल्यबलत्वंजानानः शङ्कते नचेति वस्वचारितार्थ्यंतूक्तमेव। पक्षानुरूपेति न्यायेनसमाधत्ते विप्रेति अन्यथेति कार्यकालेत्रिपाद्यांविप्रतिषेध सूत्रोपस्थितौ विप्रतिषेधरूपनिमित्तनाशकपूर्वत्रेत्यनेन विप्रतिषेधसूत्रस्यबाध उक्तासिद्धत्वनिरूपकपूर्वस्यासिद्धिसंपादनद्वाराविप्रतिषेधसूत्रस्य तत्प्रतिबन्धकत्वमित्यत्रविनिगमनाविरहापत्तिरिति भावः। एतेनाधिकारत्वेयथोद्देशत्वेविधित्वेसपादित्रिपाद्योर्विप्रतिषेधाभावाऽनुवादनेन वार्त्तिकसामञ्जस्येनेदमसंगतमित्यपास्तम्। अतएवतस्याययथोद्देशत्वादेववत्वमेवेति वस्वभष्भावानापत्त्युभयापादनेत्वरुचितयाऽपि नेयं स्यादिति भावः दितमिति। अन्यथापक्षद्वयसाधारणत्वेनतदनापत्तिरेवापादिता स्यात् यत्रानुवृत्तिरिति एवंचाधिकारत्वेत्रिपाद्यामपीत्यादिफलितमिति भावः। स्वदेशेवाक्यार्थबोधेफलाभावेपि पदार्थोपस्थितौ प्रतिबन्धकाभावेन तत्सत्वादाह। सपादेति। आदिभिरिति। आदिपदबहुवचनोपपत्तिस्तुन मुडादेश इत्यस्य नलोपेतिनियमरूपस्य च निषेधस्यसत्वान्निर्वाह्या। परत्वादिति शब्दान्तरप्राप्त्योभयोरप्यनित्यत्वात्। अन्तर्गतयावन्निमित्तकत्वेनापरनिमित्तकत्वेनोभयोरप्यन्तरङ्गत्वात्। अतइति। अदसइति सत्वेनोभयोरपि प्रतिपदोक्तत्वात् परत्वेनैवव्यवस्थेति भावः। ननु शास्त्रासिद्धत्वेपि अनित्यत्वेन तन्न्यायाप्रवृत्तिरवश्यं वाच्या अन्यथापि पठीरित्यत्रपूर्वप्रवृत्तिकत्वेनषत्वे शास्त्रासिद्धत्वेप्युक्तन्यायेन सकारबुद्धेरभावात् रुत्वंनस्यादिति कार्यासिद्धत्वेपि

तदऽप्रवृत्त्यानदोष इत्यत आह । शास्त्रेति । तन्निवृत्तीति स्थानिनिवृत्तिरित्यर्थः । एवंञ्चसकारनिवृत्तिबुद्धेरभावेन तत्सत्वात्तत्स्यादेवेति न दोषः । तवत्तु प्रवृत्त्यऽनन्तरमसिद्धत्वान्निवृत्तिबुद्धेस्सत्वेननस्यादिति भावः । पूर्वत्रनेति अन्नन्यासेनिषेधानां बलीयस्त्वेन प्रकल्प्येति न्यायेनचान्तरङ्गस्य पूर्वमप्रवृत्तिरेवेति बोध्यम् । नन्वेवं तदऽकरणलाघवमेवेति तत्रेष्टापत्तिरेवाऽत आह । राजभ्यामिति । दिगिति तेनकिम्नुक्तमित्यादावऽनुस्वारादौ कर्तव्येत्वादेर्निषेध इत्यस्यसंग्रहः वाक्यभेदेति नन्वस्तुपदैकवाक्यतातावतापि नमुन इति सूत्रेऽधिकाराद्ऽसिद्धपदसम्बन्धेमु असिद्धंनेत्याशयात् मुभावनिष्ठासिद्धत्वस्यैवानेननिषेधः । नमुभावस्येति चेन्न । पदैकवाक्यतापक्षेऽद्रसोसेरित्यत्रोपस्थितावऽसिद्धपदस्य मुभावेनाऽन्वयेसिद्धत्वविशिष्टमुभावस्य विधानात्तत्रानेनासिद्धत्वनिवृत्तौ सन्नियोगशिष्टमुभावस्यापि निवृत्त्यापत्तेः । वाक्यैकवाक्यतायान्त्वसिद्धत्वं शास्त्रस्यैवेति नमुत्वस्य तत्संनियोगशिष्टत्वम् । नन्वेवं नाभावेकर्त्तव्येऽसिद्धत्वनिवृत्त्यामुत्वस्यापि निवृत्तौ कृतेनाभावेऽसिद्धत्वनिवृत्तिबोधकस्य निष्फलत्वापत्त्यासंनियोगेति न्यायबाधइति वाच्यम् । गौरवात्कार्यासिद्धत्वापत्तेश्चेत्याहुः । कार्यस्यशास्त्रजज्ञानवेलायामसिद्धत्वमिति पक्षेनमुन्नलोपः श्चुत्वं धुडित्याद्यक्षरस्वारस्येपि भाष्याग्रहीतत्वान्नाश्रितस्स इति बोध्यं । बाह्यप्रयत्नाइतोति । एषां बाह्यत्वं विवारत्वादिकञ्चोपपादयति । काकलेति अधस्तादित्यनेनास्य बाह्यत्वं सूचितम् । अघोषेस्यत्रनञोऽल्पार्थकत्वादाह । अल्पघोषेति । अर्थानां वक्तु मिच्छाया

असम्भवादाह । तद्बोधेति नन्वेवं ह्रस्वादिजनक एकः स्प-
र्शादिजनक एकः । अन्त्यादिघातजनक एक इति एकैकस्य वर्णस्य
प्रयत्नत्रयं प्रयत्नद्वयं वा जनकमिति तात्पर्यम् । तच्च संहितासू-
त्रभाष्यविरुद्धं तत्र हि स्वोत्पादितवर्णनाशावधिप्रयत्नस्थितिः ।
ततस्तं प्रयत्नमुपसंहृत्य द्वितीयप्रयत्नोत्पत्तिरिति प्रथमवर्णना-
शकाले द्वितीयवर्णोत्पादकप्रयत्नोत्पत्तिकालेच्च वर्णविरामसत्वा-
त् प्रतिवर्णं विरामसंज्ञाप्राप्नोतीत्याशङ्कितं तस्य चायं भावः ।
नाभिरूपैकदेशावच्छेदेनानेक प्रयत्नोत्पत्तियुगपद्बाधितेत्येव-
ञ्चैकस्यैव प्रयत्नस्याभ्याघात ह्रस्वादिस्पर्शादिजनकत्वमिति
स्पष्टमेवायातमिति तदेतत्सकलं मनसि निधाय शङ्कते यद्यपीति
अयोगवाहनिरासायाह । शषसेति । अत एव विसर्गादेः पृ-
थग्ग्रहणमत एवानुस्वारस्य श्वासादयो न अनुप्रदानं वाह्येति
उद्योते तु श्वासोऽनुप्रदीयते यैरित्यर्थ उक्तः रूढौ मानन्तु तुल्यास्या-
दिसूत्रस्थभाष्यमेव । यद्यपीति खयादिष्वघोषाऽन्यतमेति
पाठः । एवं हशादिष्वपीति बोध्यम् । घोषाऽघोषाऽन्यतरेति
पाठे खयादिष्वित्यत्रादिना हशादिपरिग्रहः शास्त्रानुरोधेन तथा
द्वन्द्वप्रयोगेऽपि यथासंभवयोगो न यथासंख्येन वर्गेष्वेवं यमानां
स्थितिरिति भ्रमवारणाय षष्ठ्यौचित्यास तदभ्युपपत्तये चाह । वि-
घे ति नन्वेवमपि प्रयोगे युगपच्चतुर्णां स्थित्यऽभावेन लक्ष्यवि-
रोध एवात आह । निर्द्धेति । अन्यतमादिति । एतेन परशब्दयो-
गेन चतुर्थीति पञ्चम्युचितेत्यपास्तम् । निर्देशासंगतिरिति । य-
द्यपि यावत्स्थानसाम्यमिव यावत्प्रयत्नसाम्यविवक्षामन्तरेणा-
पि निर्देशसंगतिस्तथापि यावत्प्रयत्नसाम्यानङ्गीकारे खकार-

हकारयोरपि सावर्ण्यापत्तौ देव ⤫ खनतीत्यादौ हशिन्नेत्युत्वा-व्यापत्तिः कर्त्तरिभुवः खिष्णुजित्यादिनिर्देशासंगतिश्च एवञ्चय-त्किञ्चित्प्रयत्नसाम्ये इदमऽसंगतं यावत्साम्ये मूलोक्तमऽसंगत-मिति तात्पर्यम् ऋलवर्णयोः। एतदर्थमेव तद्बोधार्थमेव अशत्व-मिति। तदऽभाववादिनापदार्थोपस्थित्यऽभावेन बोधाजनकत्वे-नाऽकरणीयत्वमित्यर्थः । नचानुपदेशत्वमात्रेणाऽसत्वशङ्काया माकारादीनामपि सा स्यादिति वाच्यम् । अक्षरसमाम्नाये-जातिनिर्देशसत्वेनात्वादिजाते राकारादिषु सत्वात् । ऋकारे लत्वजातेरभावादिति वदन्ति संय्यन्तेत्यादाविति । आदिनाकु-क्कुटादिपरिग्रहः । द्विव्यञ्जनेति । मात्रादिरयंसच्च कुक्कुटादौ संयो-गगुरुसंज्ञाप्लुतादिरूपः संय्यन्तेत्यादौ चानचीति द्वित्वरूपः तस्यद्विव्यञ्जनाश्रयत्वं प्रकृतलक्ष्याभिप्रायम्। हलोनन्तराइति। सूत्रोपन्यासस्तुकुक्कुटाद्यनुरोधादिति बोध्यम् । एतेन परसव-र्णस्यासिद्धत्वात् अनुस्वारं हलमादायसंयोगसंज्ञादिः सेत्स्य-तीति तदऽसङ्गतमित्यपास्तमिति वदन्ति वस्तुतस्तु अनुपदि-ष्टत्वादित्यस्य शिष्टैरिति शेषोनतुमहेश्वरेणेति तथासति अयो-गवाहानामऽद्गुणत्वमृतिऋवेत्यादेः कर्त्तुमशक्यत्वस्य ब्रह्म-णापि दुर्वारत्वात् वृत्तिसमवायार्थ उपदेशलकारोपदेशेयदृच्छे-त्यादिकं चोपलक्षणतांविनानोपपद्यते । किञ्चाकारादिसत्वस्य जातिनिर्देशेनोपपादनेमात्रिकव्यञ्जनादेरसत्वमुपपादयितुमश-क्यमिति चिन्त्यमेवेदमित्याहुः। तदऽपरेनक्षमन्ते चतुर्दशसूत्री-तिनिर्दिष्टजात्याक्रान्तत्वस्याऽसत्वशङ्कानिवर्त्तकत्वे मात्रिका-ऽर्द्धमात्रिकव्यंजनसाधारणयत्वादिजातेस्तत्रानिर्दिष्टत्वेनानुप-

देशान्मात्रिकव्यञ्जनासत्त्वप्रतिपादकैरेओङ्सूत्रस्थभाष्यविरो-
धात्तस्माच्छिष्टोपदेशएवासत्त्वशङ्कानिवर्त्तक इत्येवभाष्यकृदा-
कूतम् । किञ्चानुवादोपि संदेहनिवर्तकएवेति । प्रागुक्तत्वेन
तस्यन्त्रलकारेबहुशः प्रदर्शनेनन्त्रित्यमेव योग्यमायाति अन्ये-
तुवस्तुतएवमानुपूर्वीकाश्रुतिरेवेयमिति। नानर्थक्यशङ्केति । स-
मर्थयांचक्रुः। तदाकूतंकिमिति तुसंशयितमेव । अतएवतदुपदे-
शप्रयोजनगणनावसरे एतन्नोक्तं भाष्यकैयटयोःनाज्झलौ । मत
इति। तालव्यावेकारच्चवर्गाविकारैकारौयकारः शकारः शेषऔ-
ष्ठ्योपपादयितव्यइति बहूनप्रातिशाख्यमते इत्यर्थः । एकारा-
दीनामित्यादि बहुवचनाभ्यामेकारशकार ओकारोपध्मानीया-
दिपरिग्रहः सूत्रमतेविवृतत्वव्याप्यानां संज्ञानुपयुक्तत्वस्योक्त-
त्वादनयोर्विवृततरत्वादिनाभेदेपि तत्प्रातिबोध्या । अत्रमतेय-
जुष्येकेषामित्यादिनिर्देशादैऔजित्यारम्भादैचामिवेकारैकार-
योः स्थानसाम्येपि संज्ञान । स्वरानुस्वारोष्मणामस्पष्टमिति त-
त्रैव प्रातिशाख्येप्रयत्नस्यैक्यस्योक्तत्वेन च संज्ञाप्रातिबोध्या
अत्रवदन्ति। एवमपिनाच्शलावितितुन सूत्रितंशलांपरस्परंस-
वर्णसंज्ञानिषेधापत्तेः यथाश्रुतन्यासेपूर्वसवर्णकरणान्नेतिहशि-
चेत्येवसिद्धइति। एतदवतरणस्थपाठकग्रन्थेऽतीति वचनमि-
त्यस्यानुवर्त्यंयोगविभागेन विधानमित्यर्थः । इति नशङ्का-
कलंकलेशः। व्यावत्यर्थमिति । अत्ववतिच्चेदत्येवेतिनियमद्वारे-
ति भावः । तपरकरणेनदीर्घवद्ध्रस्वाकारेपि व्यावर्त्यातत्रानेन-
नसिद्धिः। सावर्ण्यंनस्यादिति। परवल्लिंगमिति नपुंसकत्वापत्ति
बोध्या । अत एवेति प्रश्लेषादेवेत्यर्थः । एकपदएवं दोषसं-

भवेन पदद्वयपर्यन्तधावनं व्यर्थमिति सूचयितुमाह । उपलक्षणेति । भावप्रत्ययान्तस्य संज्ञाशब्दपरत्वादनन्वयोऽत आह । बोध्येति । इदं शकारादिसंग्राहकस्य हकारादीत्यादिपदस्योपादानं ॥ जातिपक्षेतुजातेर्भेदात् शङ्कैवनेतिभावः । अणुदित् । ज्ञापयतीति गतिकारकेतिवद्बोधयतीत्यर्थः । अतोनसार्थक्यप्रश्नावसरः ननु वार्तिकस्योपदेशन इति वदज्ञानेनप्रवृत्तिरत आह । भाष्येति ननु भाष्यमपि योगरूढ्यापरिभाषार्थं बोधयतीत्यर्थकमत आह । ज्यादेति । एवंचशब्दार्थसम्बन्धनिश्चयस्य कष्यनुभवसिद्धत्वेन तदनुक्त्यातस्य तदर्थकत्वमप्रामाणिकमिति भावः । एतेनेति आवश्यकपरिभाषयाघटवदित्यादिसिद्धौज्ञापनेफलाभावेनेत्यर्थः । सुलभत्वादिति । अत्रपक्षेकुक्टुक्नुमतुक्धुडादौन दोषः। उकारमात्रेइतइति व्याख्यानात् । परेश्चघांकेत्यादाविवस्वरूपपरत्वं वा सवर्णिन इति सवर्णशब्दोऽत्रधर्मपरः। चादीति। इशादाविवनव्यमतेऽनुवादेपि इत्संज्ञालोपप्रवृत्तौ प्रतिबन्धकाभावेनोकारविनिर्मुक्तस्यैव चादेरूपस्थित्यान्यायसिद्धमिदमित्यन्ये।उकाररूपावयवसवर्णानां नुशब्दोनग्राहकः । नविभक्तौ तिनिषेधेन सोरुकारस्येत्वानापत्त्यादगुण इत्यादिनिर्देशासंगतिः ननु यथाश्रुत एवस्वरूपपरिचायकः आस्तां किंभिन्नक्रमत्वेनात आह । ह्रस्वेति दैत्यारिरित्यादौ दीर्घाद्यर्थमारोपस्यावश्यकत्वादिति भावः । लकारग्रहणेति योह्युत् सूत्रंकथयतिनादोग्रह्ये तेति भाष्यग्रन्थेन सूत्रेष्वेवहितत्सवैंयदवृत्तौ यच्चवार्तिकेइति हरिग्रन्थेनचतयोः सावर्ण्यस्य सूत्रमतेपि सत्वात् । वार्तिकमतेपि पूर्वेणाणग्रहण-

पक्षे एकारादावाकृतिनिर्देशप्राप्तसवर्णग्रहणाभावायाप्रत्यय इ-
त्यशवन्नियमार्थमावश्यकत्वेन सत्वात् अण्ग्रहणस्य तन्मते-
प्ययं ग्रन्थोबोध्यः । लवर्णस्यऋवदिति तु प्रत्याख्यानप्रका-
रइति। प्रकृतेनावसरस्तस्येति सर्वमवदातम् । अन्येतु तपरक-
रणस्य परेणाण्ग्रहणं बोधयित्वाग्रहणकशास्त्रप्रवृत्त्याः षाद-
शानांग्रहणं प्रापय्यतपरसूत्रप्रवृत्त्यातद्बाधकल्पनयान्तारितार्थ्यं-
कल्पनापेक्षया ऋलवर्णयोः सावर्ण्यबोधनद्वारातत्प्रवृत्त्यातद्ग्र-
हणेन साफल्यकल्पनाया एवलघुत्वादिति भावः । अत एव-
नयुक्तमित्येवोक्तं न तु चिन्त्यमपास्तंवातत्रतन्नेत्यादीत्या-
हुः । समानजातित्वस्यैवेति । समानोवर्णोजातिरित्यर्थः ।
स्वार्थेष्यञ् वर्णाश्रमाचारवानित्यादौ वर्णपदेनजातेर्व्यवहारा-
दिति भावः । होतृकारेदीर्घस्तु अकोकीतिन्यासेनस्तुवचः । अ-
त्रैवपक्षेशाकल्यप्रतिबन्धस्तुनफलं ऋत्यकइत्यस्याप्रवृत्तेः । इद-
ञ्चऋत्युक्त्यनुरोधेन गौरवमनुसृत्योक्तम् । लाघवादरेतुलवर्ण-
स्य ऋवदिति शब्दरत्नोक्तमनुसंधेयम् । एतद्व्यतिरिक्तेति ।
आकारादावचीत्यर्थः । अच्त्वेन सादृश्यात् । अतःकखादौ
भिन्नजातीयेनसत्यपिसावर्ण्येनदोषः। योगविभागेनेति। भाव्य-
मानेतिपरिभाषाबोधनद्वारेति भावः । अस्याऽवश्यकतांध्वन-
यितुंव्यक्तिपक्षइव जातिपक्षेपि फलान्तरमाह। एवमिति। तुल्य-
युक्त्यायोगविभागेनेत्यर्थः । विनिगमनाविरहादिति भावः ।
अस्यफलंप्रागुक्तमपिदार्ढ्यायस्मरति अतएवइति । उभयप्राप्त-
निषेधकत्वादेवेत्यर्थः । अन्यथाजातिग्रहणप्राप्तवारणेप्येवंरी-
त्यासदुर्वारएवेति भावः । एवञ्चैवमित्यादिग्रन्थावश्यकत्वं

विषयभेदात् । एवञ्चक्कचिदेवमित्यादिग्रन्थादर्शनं प्रामादिकमिति बोध्यम् । यद्यप्यन्यतरसूत्रसामर्थ्यादिति युक्तं वक्तुं तथापि प्रथमोपस्थितत्वेनान्तरङ्गत्वात्तदेवास्त्वित्याशयेनाह । मूलेऐऔजिति यथास्थितसूत्राशयेनाह । तेनैवइति ॥ ननुसूत्रसत्वेजातिपक्षेजातीनांचतुष्ट्वात्व्यक्तिपक्षेशक्यार्थमादाययथासंख्यमिष्टंचसिध्यति तदभावेकथमत आह । एचोऽयवेति नन्वेवमपिनस्वाभ्यामित्यादौ एडिति पाठेविधेयत्वात्तयोरग्रहणेएङोश्च विधानेऽप्यनिष्टंस्पष्टमेवात आह । नय्वेति नन्वेवमानुपूर्वीकाश्रुतिरेवाऽन्यार्थमिति । नतद्वैयर्थ्यमत आह । अत्रैतदिति । ननु समुदायमध्येनिषेधस्याप्रवेशात्कथन्तेन तत्रैतदऽग्रहणमत आह । अयंभावइति । अन्नपदंविहायाणित्युक्तिसाफल्यायाह । गुणाइति । अन्येतुजातेः पदार्थत्वेपिगुणानांभेदकत्वेसूत्रमावश्यकमित्यवतारयामासुः । तपरस्तनन्वदेङित्यत्रतपरत्वं पूर्वत्रकृतार्थमत आह । भाष्यप्रामाण्येति । अनवकाशत्वादिति । तदातदननुवृतावऽनण्यऽनुपयोगेपि अणंशेतेनसमकालस्यापि गृहणप्राप्तावपि निरवकाशत्वेनानेनाणुदिदिति बाधेनास्यप्रतिप्रसवविधित्वमेवेति भावः । ननु तद्गुणसंविज्ञानेनादित्यस्य संज्ञात्वमऽत एवततोविभक्तिरेवञ्च तत्समकालाऽप्रसिद्ध्यासूत्रं मूकंस्यादित्यत आह । अत्रेति । एवञ्चषष्ठ्यर्थ बहुव्रीहौ तत्संभवेप्यऽत्रपञ्चम्यर्थे स इति न दोष इति भावः । साजात्येनेति । इदमुपलक्षणंपंचम्यर्थ बहुव्रीहिविगृहप्रदर्शनपरभाष्यस्य । एतेन पंचमीसमासेएङादिशब्दस्यावधित्वेनाङ्गीकारादऽतोऽसदित्यपास्तम् । गमकात्तत्रत्या-

गेपि अत्रत्यागेमानाभावाच्च नचैवं वृत्तिमत्वेपि तकारापेक्षत्वा-
त्पारिभाषिकार्थवत्वंतस्यनेति वाच्यम् । तत्रविभक्तीतरस्य-
प्रकृतिप्रत्ययान्यतरस्यवृत्तिमतोवागृहीष्यमाणत्वात् । नन्वेव-
मप्यऽवयवत्वात् । सन्निपातपरिभाषयानसुप्समुदायात्तुधुडित्य-
त्रैवसुलभमिति चेत्सत्यम् । नियमार्थेति तपरःसवर्णस्य-
चेत् सर्वस्यजात्याश्रयतयाग्राहकस्तर्हिस्वसमकालस्यैवेत्यर्थः ।
एवञ्चयद्व्यक्तिमादायजातिनिर्देशस्तद्भिन्नकालव्यक्तियुक्तजात्य
ऽग्रहइति फलितम् । एवंचेति अयंभावः । व्यक्तिपक्षेपक्ष-
द्वयेपि परत्वानवकाशत्वाभ्यामणुदित्सूत्रबाधेन विधित्वेपिसू-
त्रसार्थक्यमेवेति लाघवात्तत्रतदेवाश्रितम् । अत्रतुपक्षेविधि-
त्वेबाध्यशास्त्रस्याभावेनजातिनिर्देशेनासमकालगृहणस्य दुर्वा-
रतयाऽव्यर्थमेव स्यादिति। नियमार्थत्वंपक्षद्वयेपीति । अन्येतु-
जातिपक्षाश्रयणेपि गुणानांभेदकत्वेननियामकत्वंदुर्घटमित्यत
आह । एवंचेति ननु जातिपक्षाश्रयणसामर्थ्यादेवगुणान्तर-
युक्तस्यापि गृहणंभविष्यति । अन्यथा ह्रस्वत्वादिगुणानामपि
भेदकत्वात् । तत्पक्षाश्रयणंव्यर्थं स्यादिति । किमर्थंगुणाभे-
दकत्वंनियमार्थमङ्गीक्रियतेऽत आह । सिद्धान्तेति । तथाच
तस्यैव सिद्धान्तभूतत्वेन तेनैवोपपत्तौ जातिपक्षाश्रयणसाम-
र्थ्योपवर्णनं निष्फलमिति सूचितम् । पक्षेपीत्यपि समुच्चये ते-
नजातिपक्षसंगृहः एवंच गुणाभेदकत्वमिति पक्षसह्निते जातिप
क्षेनियामकं सूत्रमिति तात्पर्यमित्याहुः । अत्र व्याख्यानेऽक्ष-
रसम्नायस्यभङ्गो बोध्यः । नप्रवर्ततेइति । प्रवृत्तौतुरमेश इत्य-
त्रैवस्यात्तपरभिन्नस्तत्कालस्येत्युक्तत्वादुपेन्द्रइत्यत्रैवस्यादि ति ।

भावः । उच्चारणार्थइति ऋकारोच्चारणार्थइत्यर्थः । तदभावेतुसंधिप्रवृत्त्यानस्यादिति । एवञ्चासंदेहायेति यावत् विनिगमनाभावादाह । मुखसुखेति । वृद्धिरा । कृतमनयोरिति भाष्यस्याऽन्यथोपपत्तेः पस्पशास्थभाष्यानुरोधेनाह । पदत्रयेति अतएवकुत्ववत् समासान्तोत्रभाष्येनापादितः । पिनाकिनइत्यादाविति । आदिनाहिरण्यपूर्वं कशिपुमित्यादि । अपृक्तसंज्ञायामित्यादिभाष्यवार्तिकविरोधादऽपृक्तएकालितिपरिभाषेति कैयटोनयुक्तइति । सूचयन्नाह । अपृक्तेति आदिनास्वरूपन्तपरंयेनविधिरित्यादि । अतएव तासामनित्यत्वव्यवहारादेव । अन्यथाऽकृत्रिमत्वादऽसङ्गतिः स्पष्टैव । ननु त्रिमात्रादिव्यावृत्त्यायत् परार्थत्वमुक्तं तद्यथोद्देशेसंभवति तदास्वगृहे वाक्यार्थबोधेनाविधेयाण्त्वेनसवर्णग्रहणासम्भवात् । न तु कार्यकालेतदाविध्येकवाक्यतयाविधेयाण्त्वेन तदसंभवादतःसिंहावलोकनन्यायेनाह । कार्येति अपियथोद्देशपक्षसमुच्चायकः प्रदेशेनसहवाक्यैकवाक्यत्वेपि वस्तुतोभिन्नवाक्यतोभयत्रसमानेति भावः । तत्रतत्रतामाह । मृजेरिति वृत्तेइति पदार्थोपस्थितेस्सत्वादिति शेषः एवञ्चवाक्यैकवाक्यत्वेपि पदैकवाक्यत्वाभावेन तत्रतस्या विधेयत्वंसुस्थमेवेतिभावः । नन्वत्रैवकिंमानं पदैकवाक्यताया एकदेशोपस्थित्यासम्भवादत आह । अतएवभाष्येति । वाक्यभेदादेवेत्यर्थः । इत्याहेति वक्ष्यमाणरीत्यायचोत्यादेरंशस्यैवोपस्थितेर्वक्तव्यतयासर्वत्रसत्वोपस्थिति कथनासङ्गतिः स्यादिति भावः यथोपदेशेत्विति । अत्रतुनतत्सम्भावनाकेवलं स्वदेशेवाक्यार्थत्वात् । वृद्धिविशेषणेति । बहुव्रीहिरयं विधेयत्वेनेति । वृद्धिर्य-

स्येत्यादावनुवादे तु न दोषः । तादृशलक्ष्याभावादिति भावः । भूवादयः किमिति । इतिनेति शेषः एवमग्रे ऽपि ननु निष्पाद्य-स्वरूपसाध्यत्वेनप्रतीयमानत्वस्यक्रियात्वेनाऽस्त्यर्थस्य क्रिया-त्वंनस्यादत आह । अस्त्याद्यर्थेति । भूप्रभृतयोभूसदृशाइति तुनोक्तं शब्दप्रभृत्यर्थकादिभूयोगे एकशेषेप्रमाणलाभानापत्ते-रित्याहुः । पदत्वानापत्तेरिति । अत्रपाठकाः इदंचिन्त्यम् । निपा-तस्यानर्थकस्यप्रातिपदिकत्वंबोधितं तत्राऽनर्थकग्रहणंनकर्त्त-व्यं निपातःप्रातिपदिकमित्याहुः वस्तुतस्तु वार्त्तिककृद्रीत्यैकदे-शिनातथोक्तम् । अर्थवत्सूत्रेऽथवेत्यादिना अधिपरीतिज्ञापके-नाऽनर्थकानामप्यऽर्थवत् कार्यभवति । इत्युक्त्वातत्प्रत्याख्या-नेन तस्यतदुक्तित्वध्वननात् । अतएवानर्थकग्रहणंनकरिष्य-ते इति सतिकुड्येचित्रमिति न्यायेन प्रौढित्वसूचकमुक्तम् । नन्वथवेत्यादिभाष्यात्तस्यपक्षान्तरत्वेनन तत्प्रत्याख्यानबोध-कमितिचेत् । पूर्वग्रन्थस्यैवोत्तरपक्षबोधनात्प्रत्याख्यानस्यैवयु-क्तत्वात् । परन्तूद्योतेज्ञापकस्यशैथिल्यमुक्तमित्याहुः । यद्यपि भाष्येप्रसज्यप्रतिषेध उक्तस्तथापि स नयुक्तः वाक्यभेदासम-र्थसमासापत्तेस्तद्ध्वनयन्नाहासत्वेइति । नन्वेवं भाष्योक्तप्र-सज्यप्रतिषेधफलेविप्रातीति । विप्रइत्यत्राति प्रसङ्गस्तत्रप्रश-ब्दस्य क्रियाविशिष्टद्रव्यवाचकत्वात्समुदायस्यच द्रव्यभिन्न-त्वात्तदन्यत्रवर्त्तमानत्वात् । इष्टापत्तिस्तुनाव्ययसंज्ञायांत-दन्तविधिसत्वेन तदन्तस्याव्ययत्वेसुपोऽश्रवणापत्तेरत आह । विशेष्येति । अत्रसत्वशब्देनसतोभावः सत्वमिति । साध्याव-स्थायत्नक्रियारूपासत्तानोच्यते चादिनान्तद्वाचित्वाद्किन्तु-

सीदन्ति क्रियागुणादयोऽस्मिन्निति व्युत्पत्त्या द्रव्यं तदाह । द्रव्येतिभट्टा आहुः । गतिश्च प्रतिप्रणीतमिति । प्रसङ्गादनन्तर इत्यस्य व्यावर्त्यं प्रदर्शनाय प्रतीति । अत्र प्रस्य तत्समावेशो बोध्यः । प्रकृतिवदित्यतिदेशेन सुपो लुकि तुनिरित्यादौ रुत्वादिस्यादत आह । प्रेति यथासम्भवं लौकिकालौकिकान्यतरप्रयोगानुकरणानीत्यर्थः । अन्यथा दुसिति स्वपयोर्दुसि चस्थः कुरित्यसंदिग्धन्यासेन दुस्येव कुप्रत्यययोर्ज्ञो क्रियतामन्नदुरिति सुषामादिषु दुष्टुशब्दस्त्यज्यतामिति भावः । यावता विनानुपपन्नमिति । प्रतिपदोक्तपरिभाषापि नेत्यवबोध्यम् । ननु निरःकुषः सुदुरोरधिकरणे निसस्तपतावित्यादिनिर्देशात् । त्रितयस्य सफलस्य सत्वेऽपि दुसः किंफलमत आह । दुसःपाठेति । नवेतिवि । ननु तत्सूत्रसत्वेपीतिमास्तु शब्दैकार्यस्य बाधादत आह । तयोरेवेति प्राप्ते ति विभाषोपपदेन प्रेत्यादिषु । अप्राप्ते ति । विभाषोर्णोरित्यादिषु स्वरूपं इदं नसंज्ञापरं पूर्वनिर्देशात् रूपग्रहणेनार्थस्यापि ग्रहणविवक्षयेति भाष्यविरोधापत्तेश्च । रूपंशब्दस्य संज्ञे तिभाष्येतु संज्ञाशब्दः संज्ञायतेइति व्युत्पत्त्या बोध्यपरः । नियमार्थमिति आर्थिकनियमार्थमित्यर्थः । शाब्दस्तु नन्वेत्यादावगते । ननूभयोर्गोश्रृङ्गवत् समवप्रधानयोः संज्ञित्वांशे आनर्थक्यमुक्तदोषापत्तिश्चातो विशिष्टस्य तत्वं वाच्यं । तत्र हि विनिगमकमाह अर्थोनेति । नन्वेवमप्यशब्दसंज्ञे तिव्यर्थमर्थैकार्यस्य बाधादत आह । दाधेति आदिरन्त्येत्यस्य परत्वादेतदुपन्यासः परत्वेति । तक्रकौण्डिन्यन्यायेन तु न सर्वबाध्यत्वमस्य अतिशदन्ताया इत्यनेन संज्ञिनोस्तेन तदभावज्ञापनात् । बाधेति सं-

ज्ञाद्द्वयप्रयुक्तकार्याश्रययोर्भेदाद्विरोधाभावेन समावेशस्तुनापा-
दितःषान्तस्यषट्संज्ञाकरणेन तदभावज्ञापनात् । आकडोइति
नियमात् । अन्यत्रसडन्चिइति तुनयुक्तंसंज्ञायाएकत्वात् ।
संज्ञिनोश्चभेदात् । इति एकासंज्ञे तिहि सूत्रंनत्वेकः संज्ञोइति
च अस्यपरत्वेपि प्रतिपदोक्तत्वात्ताः स्युरेवाऽत आह । षाङ्क्रेति
कर्मसंज्ञादेरिति । आसांपरत्वेप्यन्तरङ्गत्वादियमेवस्यादिति
भावः । तासांचारितार्थ्यंतुकर्मणोरोमन्थेत्यादावूहनीयम् । प्र-
त्यासत्तिसिद्धार्थानुवादकत्वेन यथाकथञ्चित्सूत्रसार्थक्येपि नि-
षेधस्तुव्यर्थएवात आह । लक्ष्येति । ननु लक्ष्यानुसारादिना-
सिद्धप्रत्याख्यानं नयुक्तमत आह । अतएवेति लक्ष्यानुसा-
रस्य तत्राप्यावश्यकत्वादेवेत्यर्थः । अतएवभगवतेति तत्सिद्ध-
स्यासार्वत्रिकत्वादेवेत्यर्थः । सिद्धंविद्यमानंवचनं अशब्दसं-
ज्ञे ति । अन्यथाप्रत्याख्यानपक्षेपितद्दोषसत्वादसङ्गतिः स्पष्टैवे-
तिदिक् । येनवि । अस्माकंनकेवलं सुविभक्तावेवेदं किन्त्वन्य-
त्रापीत्याह । किंबहुनेति । अन्यत्रार्थेइति । अत्रमानंकर्तृ कर्मणोः
कृतिअर्थस्वामीत्वाद्यर्थनिर्देशः इतरत्रलक्षणयासाधुत्वेतु तद्वै -
यर्थ्यंस्पष्टमेव द्वितीयेमानमाह प्रत्यय इत्यादिना उक्तहेतोरे-
वात आह । तृतीयान्तेनेति गौणलक्षणयेति भावः । मम-
तुनतद्विरोधः विशिष्टार्थानुशासकाभावात् । बोधस्यतत्प्रका-
रकस्यैवाङ्गीकाराच्च नन्वयंविशेष्येपीत्यत आह । तदुक्तमिति ।
तथान्त भाष्यप्रामाण्यात्तथेति भावः । धातोर्यंतमिति । अवध्य
वधिमद्भावःषष्ठ्यर्थः । अतएवयस्मात्परइति तृतीयकोटिनोप-
लक्षिताः सम्बन्धसामान्यषष्ठ्यैवतल्लाभात् । उपलक्षणमिति ।

अतएवस्योन इत्यस्यासिद्धिमाशंक्यैतदुक्तिः संगच्छते। अन्यथा यणिऊनशब्दानाश्रयणात् । तदसंगतिः स्पष्टैव वार्तिकेपि येनेत्यस्यसम्बन्धात्तस्यापि विशेषणेएवप्रवृत्तिः । जरायाजरसित्यादावपिअङ्गाद्युद्दिश्यजराशब्दादिभिर्जरसादेशविधानान्नासङ्गतिः वस्तुतोजराशब्दस्यादेशेपि उद्देश्यतायाः शाब्दमर्यादयांगेएवसत्वात् । नन्वेवमपि इकोयणित्यादौशब्दरूपं विशेष्यमादायस्यादेवेति भाष्यासङ्गतिरत आह । तत्रेति । ननु यस्मिन्नपरतोविधिस्तस्याकरणत्वेवान्तोयीत्यादौ तदादिविधिर्नस्यात्। अतउभयस्यावधारणबीजमाह । तच्चान्तरंगेति । पाठ्यमिति । अन्यथा लोकन्यायसिद्धस्यव्यपदेशिवद्भावस्य वचनेनबाधः स्यादिति भावइत्याहुः । वस्तुतस्त्विदंन्निन्त्यंतदन्तेकार्यबोधनेनसार्थक्येनबाधकत्वायोगात् । व्यवदेशिवदितिपरिभाषावतरणस्थस्वग्रन्थविरोधाच्च। पृथक्योगस्यदृष्टफलाभावेन प्रत्याख्यातत्वेप्युत्तरत्रानुवृत्तौ बाधकाभावाच्च । तस्यचेति पाठफलंतुव्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्यविषयेरोणीत्यादौ बोध्यम् । प्रत्ययांशेइति समासांशेतुनमानमिति भावः । शब्दानांनित्यत्वादाह । उच्चारणेति । तच्चवर्णोत्पत्तितद्व्यञ्जनान्यतररूपम् । ननु तदभाववत्ताबुद्धिंप्रतितद्वत्ताबुद्धिः । प्रतिबन्धिकेतिहरिरित्यादावुच्चारणसत्वेनतदभावात्तदसिद्धिरत आह । सचेति फलान्तरमपि दुर्बलभाष्योद्योताभ्यामवगन्तव्यम् । व्याख्येति । संज्ञातत्तद्विधिवैयर्थ्यलक्ष्यासिद्धिमूलकादित्यर्थः । परःसंनिकर्षः प्रायःपरेणेत्यादि अयंभावः । परनिरूपितमनान्तरीयककालाव्ययेन पूर्वत्वंसंहितातथैवपूर्वनिरूपितंच परत्वं

विनिगमनाविरहात् । संहितायामितिच्चप्रदेशेकार्यिविशेषणंत-दाश्रयत्वमेवंच्च तद्विषयंतदुभयमपि निमित्तोपादानेतन्निरूपि-तमेव प्रत्यासत्तेः अनुपादानेतुयत्किञ्चिन्निरूपितं कस्याप्यप्र-त्यासन्नत्वात् । तदुपादाने यथा इकोयणच्चिझयोहो । आद्ये-अज्निरूपितं इग्निष्ठं पूर्वसाहितोये हनिष्टंझयनिरूपितं पर-त्वं सा अनुपादानेतुयथावावसानेइति । तत्र सप्तमोनिर्देशा-नांबहुत्वादुक्तं प्रायइति । पञ्चमीनिर्देशानामवसानकार्याणां चाल्पत्वादुक्तं क्वचिदिति न्यायसिद्धेर्थेलिंगमप्याह । अतएव-वावसाने इति । अतएव वासुदेववाच्चकाकारस्य संबुद्धाव इत्य-त्रानुनासिकःर इत्यत्रनविसर्गःद इत्यत्रच्चर्त्वन्ननुविसर्जनीयस्य स इति । सूत्रभाष्यपर्यालोच्चनयापूर्वत्रतानोष्यन्तएवतथाच्च तत्र भाष्यं संहितासंज्ञायां प्रकर्षगतिर्विज्ञायतेसाधीयोयः परः सन्निकर्षइति । कश्चसाधीयः यःपूर्वपरयोरिति तस्यायं भावः । अनुयातपूर्वपरोभयनिरूपितमऽनान्तरीयककालव्यये तंनान्तरीयककालगतंपौर्वापर्यसमूहः संहितातद्विषयत्वंच्च त-त्परत्वमेव संहितामितिच्चप्रदेशेपञ्चम्यन्तोपादाने तद्विशेषणं सप्तम्यन्तोपादानेऽनुपादानेच्चकार्यिविशेषणं उभयोपादानेतूभ-योर्विशेषणं उपात्तोभयेत्यनेन निरूपकोभयमध्ये अन्यतरोपा-दानसत्वमिति विवक्षितं तेनसादेशस्यनावसानेप्रवृत्तिरिति एवञ्च पूर्वत्वंसंहितेति पर्यवसितम् । तथाच्चावसानकार्येऽसं-भवात् । संहितापदासम्बन्धेन पूर्वत्तेषां इष्टत्वादिति चेन्न उत्तरभाष्येतस्य दूषितत्वात् । गौरवादुक्तसाधीयस्त्वस्य नि-र्मूलत्वाच्चतस्यैकदेशयुक्तित्वान्नचैवमपि संहितायामिति सूत्रे-

काशायाः संहितायाइति । अइत्यत्रापि नावसानसंज्ञासाफल्य मवसानकार्याणां संहिताधिकारेपाठात्तदऽप्राप्त्यासंज्ञायाः फलाभावेनाचिरादेशस्यैवानवकाशस्य वक्तुंशक्यत्वात् । प्रतिवर्णमवसानत्वेतस्याऽव्यभिचारात्संज्ञावैयर्थ्यं तततत्रावसानपदवैयर्थ्यमनु घभाष्येवाध्यबाधकभावविचारकरणाच्चास्यैकदेश्युक्तित्व मिदमेवाऽभिप्रेत्याऽथवेत्यादिग्रन्थप्रवृत्तेश्च । न्यायेनविषयभेदेपि बाधः स्यादिति । तदऽनु वादकाकडारसूत्रेणेत्यर्थः । तस्य न्यायस्यसंज्ञाविषयेऽप्रवृत्तेस्तत्सूत्रेवक्ष्यमाणत्वात् । अतएव समाधौसूत्रस्यैव सङ्कोचः । नन्वेकस्यैकैवसंज्ञे तितदर्थात् । कथं तस्यापि प्राप्तिरिहसंज्ञिनोर्भेदादिति चेत्सत्यम् । संज्ञाद्वयप्रयुक्तकार्यस्यैकवर्णवृत्तित्वेन संज्ञिनोरप्यैक्यमभिप्रेत्य भाष्येबाध्यबाधकभावोक्तिरिति कैयटएवस्पष्टत्वात् । वस्तुतस्तुन तत्प्राप्तिरिति सिद्धत्वेनाथासंविनैव समावेशइति बोध्यम् ।शङ्कित्रभिमानानुसारेणैवोत्तरयति । तदिति । अयुक्तत्वादिति।इदमुपलक्षणम् पूर्वोक्तलक्ष्यासिद्धेरपि एतेनसादेशोस्वरीत्यस्य मण्डूकानुवृत्तिरेकदेशो स्वरितत्वप्रतिज्ञाच्चतव ममतुसूलद्वये संहितायामित्यस्य मण्डूकगतिरिति सममेवेत्यपास्तम् । परेणैवसंहितेति बहुतरगौरवप्रदर्शितत्वाच्च केचित्तुपूर्वोक्तप्रत्याख्याने न तेषामनभिधानकल्पनाद्यथाश्रुतंसाध्वित्याहुः।सुप्तिङन्तम।सुप्तिङित्यस्यप्रत्याहारत्वेतिङ्साहचर्यस्य नङिसम्बुद्ध्योरिति ज्ञापकस्यचोद्योतोक्तस्य सम्भवेपि टापूडापूडोपचापत्य पपाशपूकल्पपसुकतमपकारेणेत्यत्रतदसम्भवात् । तदऽपहायोभयसाधारणमाह।ऽयाख्येति। स्वादिष्वित्यादिग्र-

हादित्येके नचतिङ्साहचर्यादेकसूत्रोपात्तएवसुबपीति वाच्यम् । प्यङ्ष्यङ्ङांसत्वात् तत्रापि व्याख्यानस्यशरणीकरणीयत्वात् । सुब्ग्रहात्तिङेकसूत्रोपातएवेत्यपि केचित् यद्यपीति उक्तेरिति पंचम्यन्तस्यशब्दरूपविशेष्याध्याहारेहेतुत्वं । शब्देति तदादीत्यत्राऽन्यपदार्थजिज्ञासायां तदऽध्याहारस्यावश्यकत्वात् । गुणानांचेति न्यायाच्चेति भावः । एतेन तदादेरिति विशेष्यमादायैवतत्सिद्धौ तदऽध्याहारोमुधैत्यपास्तम् । पूर्वंसामानाधिकरण्यासंभवेन तद्विशेषणतयातत्कल्पने क्व शास्त्र किंचप्रत्ययग्रहणेतदादीति विशेष्यमादायतदन्तविध्यङ्गीकारेऽपञ्चम्या इत्यस्यापूर्वत्वं स्यात् । तस्य प्रत्ययविशेषणतयाऽन्वयासम्भवात् । शब्दरूपस्यतुतस्योभयरूपेणाऽन्वयसम्भवेन विशेषणविशिष्यभावेकामचारेण तत्रैव तात्पर्यग्राहकं तन्मतेपिनापूर्वम् । नन्वलौकिकेऽव्यभिचारात् संभवएवात आह । आक्षिप्तस्येति अनुमितस्येत्यर्थः । शब्दरूपविशेष्यस्यत्वध्याहारादन्वयोभवत्येव तवतुप्रत्ययेनेति हेतूपादानादाक्षेपपदेनानुमितिरेवाभिमतेति भावः । तेनगौरीति । षष्ठीतत्पुरुषोऽयमतोनपुंवदितिकेचिदाहुः । वस्तुतोघसंज्ञासूत्रेस्त्रीलिङ्गे समानाधिकरणे ह्रस्वइत्युक्तेर्बहुव्रीहिरेवायम् । गौरीत्यत्रसंज्ञे तिनपुंवत्वम् । अथवा कन्याकुमारीगौरीतुनग्निकानागतार्तवेतिकोशाद् वयोवाचकोयम् । तत्रजातिकार्यं विकल्पेनेष्यतेऽतोजातेश्चेति निषेधान्नपुंवत्वम् । प्रत्ययग्रहणेचापंचम्याइति वार्तिकेकैयटेऽपञ्चम्याइत्यस्य दृषत्तीर्णेति प्रयोजनमुक्त्वासंज्ञाविधौतर्हितदन्तविधिनिषेधस्य किंफलमि-

स्याशङ्कितमेव अतत्सामर्थ्यात् । प्रदेशेषु तदऽभावे दृषत्तीर्णेतिसिद्धौ नेदमसाधारणमस्य प्रयोजनमितिच तदाशयस्ततश्च यदिसंज्ञाविधौ प्रत्ययग्रहणेतदन्तस्यसंज्ञास्यात् । प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तङ्गृह्यतेतिसमाहितं घादिभिरुत्तरपदस्य विशेषणादिति भावः । एवंचकुमारीगौरब्राह्मणितरेत्यत्रकुमार्याह्रस्वः प्रसज्येतेति तद्व्यावृत्त्याचरितार्थमिति सङ्कतमेवप्रयोजनमिति तदाशयस्तत्रसमाधेःफल्गुत्वात् । कैयटङ्कटाक्षयन् सिद्धान्तत्वेनशङ्कांनाटयति एतन्निषेधेति । पूर्वोक्तप्रयोजनं तुनसतिसम्भवे उत्तरपदेत्यस्य विशेषणत्वात् । अतएव तदधिकारेप्रत्ययग्रहणे एवनिषेध आरब्धस्तस्यप्रत्ययविशेषणत्वासम्भवात् । नचेति यद्यपि सामर्थ्यान्नभविष्यतीति । समाधिरनुपदमुक्तोवक्तव्यस्तथापितत्प्राप्तिरेवनेति न्याय्यंसमाधिमाह । पदत्वेति तत्रत्योद्योतस्यभाव इत्युक्त्याप्रदीपाशयप्रतिपादकत्वान्नतद्विरोधः । अन्येतु स्वरूपव्याक्रियैवपराक्रियेति न्यायेनशङ्कास्वेनैवानुवादोऽतएवतदव्यवधानेनैवशङ्कासमाधानान्तरंच सङ्गच्छतइत्याहुरिति दिक् । यद्वा ननु संज्ञाविधावित्यत्रसम्बन्धसामान्यषष्ठ्यासमासेन प्रदेशेपितन्निषेधः परिभाषयैवसिध्यतीति सामर्थ्येन तद्वारणफलङ्कर्मषष्ठ्यासमासविशिष्टज्ञापनेत्वन्तग्रहणसार्थक्यं दुर्वचमित्याशयेनशङ्कते नचज्ञापितेपीति अन्येतु नन्वत्रोत्तरपदाधिकारेप्रत्ययग्रहणेतदन्तविधिर्नास्तीति तदन्तविधेःप्राप्तिरेवन नन्वत्रद्वितीयतदन्तविधेरभावएवतयाकल्प्यस्तथासत्यणन्तेउत्तरपदे इत्यर्थापत्तौहार्द इत्यस्यासिद्धिरिति चेन्न रात्रेःकृतीत्याद्यर्थंय-

त्रप्रत्ययस्यविशिष्योक्तिस्तत्रैव तत्प्रवृत्तेर्वाच्यतयातद्प्रवृत्तेः नन्वेवमपिरदाभ्यामित्यादौ प्रत्ययगृहणेचापञ्चम्याइति तदन्तविधेरप्राप्तेश्चारितार्थ्यान्नसामर्थ्यमिति चेन्न रदाभ्यामित्यस्य प्राधान्यात्तकारविशेषणतयानिषेधाप्रवृत्तेरत एवचरितमित्यादौ न नत्वंनचस्फायःस्फीनिष्ठायामित्यत्रनिष्ठांत इत्यर्थवारणायपञ्चम्यन्तावध्याक्षेपेण प्रत्ययगृहणेचेतितदन्तविध्यभावात् । तत्रचारितार्थ्यमिति वाच्यम् । अनयैवरीत्यातदन्तविध्यभावेसिद्धे आक्षेपेमानाभावात् । न चक्षिङः क्तानिष्ठयोरित्यत्र क्तांशेप्रत्ययगृहणंचेति निषेधात्तदभाववन्निष्ठांशेपि तदभावात्तत्रचारितार्थ्यं मुक्तरीत्यैवनिष्ठांशेतदभावेत्येतत्साहचर्यात् । क्तांशेपि तदभावइत्याहुः । इत्याद्यनुवृत्तेरिति सनाद्यन्तेत्यादावुक्तरीतेरसंभवात् । परिभाषैकदेशोपस्थिते रावश्यकत्वेन स्वरितत्वप्रतिज्ञानंमुधेत्याहुस्तन्न । अङ्गमितियोगविभक्तेतत्संबन्धाय तत्वस्यावश्यकत्वात् बृहत्युपस्थितेरप्युक्तत्वाच्चनक्षोदः । नन्वेवमप्यत्रतदावश्यकत्वेकार्यकालइयानित्यादौ कथम् प्रातिपदिकत्वमत आह । इयानिति । इदंचान्यथासिद्धसुप्लुगर्थं पूर्वप्रवृत्तसंज्ञायाएकदेशविकृतन्यायेनात्रातिदेशात् । नहिकार्यकाल उपदेशेनैवैकवाक्यता-नातिदेशेनेत्यत्रमानमस्तीति स्पर्धंचादेच इत्यत्रभाष्येबृहदेवचोदिष्यतेचास्माभिरप्युपदिष्टात् । ध्वनितश्चास्यतत्वम्वत्वन्तात्स्वार्थेइति प्रयोजनानन्तरंवदताग्रन्थकृता न्यायसिद्धमप्यर्थं प्रमाणयति हलिसर्वेति । हलोन । ननु ब्राह्मणभोजनन्यायेन प्रत्येकमेव किंनस्यादत आह । अनन्तरेति । अयंभावो हलित्येकवचने-

नैव वर्णग्रहणेजातिग्रहणात् हलन्ताच्चेत्यत्रेवाजव्यवहितहल्-समुदायस्यसिद्धौ समूहबोधकैकशेषबोधकं बहुवचनंभोजन-न्यायेन प्रत्येकंसंज्ञायामनर्थकं स्यात् । ननु वर्णग्रहणेजाति-ग्रहणेपि लिडित्यत्रासमुदायेपि प्राप्नोत्यतः समुदायेएवप्रत्ये-कं यथा स्यात् । केवलेमाभूदित्येवमर्थम् बहुवचनमिति चेत्त-त्राह । अनन्तरेति बहुवचनेनकेवलव्यावृत्तावनन्तरग्रहणंव्य-र्थमेव स्यात् । अतोऽनन्तरग्रहणेनैव केवलव्यावृतावितिरिच्य-मानं बहुवचनंप्रकृतार्थसाधकमेव ननु केवलेपि कदाचिदान-न्तर्यस्य दृष्टत्वेनकथमनन्तराइत्यनेन तद्वारणमत आह । त-स्यविशेषणतेति । अतिरिक्तस्यैवेति । अतएवैकाजित्यादिव्यव-हारोऽसहायेभेदारोपेण कृतोभाष्येतदेतन्मन्यते व्यपदेशिवदे-कस्मिन्निति । प्रकृतेतुससहायत्वान्नसोऽन्वर्थत्वेनचाभेदबाधादन-न्तरहल्समुदायवतिविशिष्टलक्षणेतिभावेनाह । पदेति । ननु बाधात्ससहायेव्यपदेशिवद्भावएवाङ्गीक्रियतेनलक्षणेति चेन्न । लिडित्यत्रापि व्यपदेशिवद्भावेन संज्ञापत्तेःमन्मतापेक्षयाऽधि-कमात्राणान्दृष्टार्थकत्वकल्पनेगौरवाच्च।वाक्येति।पदभिन्नपद-घटितसमुदायोत्रवाक्यशब्देन विवक्षितस्तेनपाहिमाश्ववउपेक्ष-सेकिंमामित्यादौवोपेक्षस इत्यादेः संयोगत्वेऽकाराकारस्यगुरु-त्वेप्लुतापत्तिरिति भावः । यद्वानबहुवचनेनसमूहस्य संज्ञावि-धानान्नब्राह्मणभोजनन्यायावसरइति सम्भवेदुत्प्रेक्षायदितद्ब-हुत्वेस्यात् प्रकृतेजात्याख्यायामित्यनेनैकस्मिन्नपि तस्यसम्भ-वादत आह । अनन्तराइत्युक्तेश्चेति । जातौचानन्तर्यबा-धात् तस्यवैयर्थ्यमिति भावः । ननूपलक्षणत्वेन तत्सार्थक्यमत

आह । विशेषणेति । अनिष्टेति । व्रीहयःसंयुज्यन्तेस्मिन्राशावि-त्यत्रवर्तिपदार्थस्यैवान्यपदार्थत्वाङ्गीकारेपि विनिगमकाभावइति भावः । किञ्चसमूहस्यैव प्रकारतयावर्त्तिपदार्थत्वेन व्यपदेशिवद्भावे तथा व्यवहारेपि प्रकृतेससहायत्वान्नतथेति बोध्यम् । ननुद्वयोर्नस्यादत आह । हलइति आश्रयगतंबहुत्वंधर्मेआरोप्यजात्याख्येत्यस्यप्रत्याख्यानात् । प्रकृत आरोपेणतत्वाङ्गीकारेपि पुनरपिद्वयोर्नस्यादतः सौत्रमिति । अनर्थकमिति भावः । एकहलस्तुना नन्तर्य्यमित्युक्तेः यद्वाहलौचहलश्चेति । उभयोरेकशेषःप्राचामनुरोधात् । स्वमतेबहूनां संयोगत्वेफलाभावस्य वक्ष्यमाणत्वादुभयोरेकशेषेनफलम् । किन्तुहल्चहल्चहल्चहलइत्येव तत्रत्रयाणांसमूहेफलाभावात्तदऽवयवेऽवतरंतोद्वयोः समूहेपर्यवस्यति नत्वेकस्मिन् अनन्तराइत्युक्तेः हलावित्येवसिद्धेबहुवचनंतुव्यर्थमेव मात्रालाघवार्थं वा हलावनन्तरावित्युक्ते । रेकमात्रागौरवादिति बोध्यम् । चिन्त्यमेव फलाभावादिति ननु मङ्क्तामङ्क्तुमित्यत्रान्त्यात् पूर्वमिति । संयोगादिलोपः फलमस्त्यवेव न च जकारेझलिसः सङ्गीतिवार्तिकेन झलादौ प्रत्ययेतद्विधानादिति चेन्न । मस्जोपि मिदंत्यात्परएवास्तु नचैवंमग्न इत्यादौ नलोपानापत्तिरिति वाच्यम् । नलोपविधायकेएवमङ्क्ते त्युक्त्यादोषाभावात् । यद्वानुम् विधायकेएवयोगविभागोस्तुनशोझलिमस्जेः स इति । मस्जेः सकारस्यनुमादेशइत्यर्थः । भृस्जोरोपधेत्यत्रेव सकारस्यनिवृत्तिरिति बोध्यम् । प्लुतःस्यादिति यत्तुपाठः समुदितानामिति पक्षेपीदञ्चोद्यं सम्यगेवेत्यन्तमनूद्यतत्रानंतराइत्युक्ते

विजातीयव्यवधौ तदनिष्टेरिति तच्चिन्त्यंतकाराकारोकारयोर्व्य-वधानाभावात् । तितउइन्द्रइत्यादावसंहितयानिर्देशेउइत्यन-योः संयोगसंज्ञावारणेनानन्तराइत्यस्यसार्थक्याच्च । द्रप्समिति भाष्येतुपनसमित्युदाहृतं झल्पदानुवृत्त्याझलन्तसंयोगादेर्लो-पविधानेन प्रकृतेतद्वारणेतुसंदित्यादौ तदापत्तिर्बोध्या । कि-त्वेनेति । अपवादोपीति न्यायस्यतुनायंविषयः अपरनिमितकत्वे-ऽपिसर्वत्रैवान्तरङ्गत्वादन्यत्रचारितार्थ्याभावात् । भूतपूर्वलघूप-धेति भूतपूर्वोयोलघुस्तदुपधेत्यर्थः । धर्मिग्राहकमानेनलघु-त्वांशेप्युपधात्वेपि तदाश्रयणेमानाभावादेतेनकुण्डतिव्युच्छ-तीत्यादावागमप्रवृत्तेः पूर्वलघुत्वसत्वादङ्गविशेषणत्वेनुमितस्य गुणापत्तिरित्यपास्तम् । नचैवमपि हरिमैतोतिहरीत् स इ-वाचरतिहरीततीत्यादावति प्रसङ्गएवेति वाच्यं । हलन्तेभ्य-आचारक्विपोऽनभिधानात् । भौतपूर्विकलघुत्वाश्रयणेपि स्था-निद्वारकतदाश्रयणेमानाभावाच्च । संधिकार्येति टिसंज्ञातुन तथा तत्रटिपदानुक्तेरितिशिवम् । इति शेखरविवृत्तिसंग्रहे-संज्ञाप्रकरणम् ॥ इकोगुण विधित्वेपि मिदेर्गुणइत्यादीनाम-निकिविधानेनोर्गुणइत्यादीनांनियमार्थत्वेनच चारितार्थ्यस-म्भवादाह । व्याख्यानेति सामर्थ्यादितितेन तत्पदविहित-योर्लक्षणाबोध्या स्वबोध्येतुनेयम् । त्यदादीनामइत्यादौदो-षात् । संज्ञिपरमेवेत्यादि । शब्दाधिकारइति भावः । इदंच-गुणवृद्धिपदानुवृत्तिमभिप्रेत्यादेङादैच्पदानुवृत्तिकरणेत्वर्थाधि-कारेणापीष्टसिद्धिरिति बोध्यम् । योजनयेति इतेःप्रत्येकमन्व-यः उच्चार्येतिशेषःतस्यचविधानेऽन्वयः अतोनद्वन्द्वाऽसाधुत्वम् ।

गुणोगुणोवृद्धिवृ॑द्धिरिति योजनेतुतत्वं स्यात् । एतल्लाभः । तृतीयांतघटितमौलवाक्यार्थलाभः ननूक्तरीत्यातयोरत्रानुवृत्त-योरर्थपरत्वात्कथमयं वाक्यार्थोऽतअहस्वादीति उच्चितार्थाधि-कारानुरोधादिति भावः । तथाचोक्तनियमस्तत्वावच्छिन्नाद-न्यत्रोपाततजातीयज्शब्दान्तरविषयकइति बोध्यं । नन्वेवं-क्वचिद्दोषापत्तिरप्यतआहप्त्यान्तेतीति । तदन्तत्वेति । षां-तत्वनांतत्वर्थः । एतेनानुवृतयोरसमस्तयोरेकवचनांतयोर्द्वि-वचनांतसमस्तैकदेशभूतगुणवृद्धिविशेषणत्वासम्भवेनशाब्दमू-लोक्तपक्षासम्भवः नहिभवतिचैत्रमैत्रौदण्डीस्त्रग्वीतीति चि-न्त्यमिदमित्यपास्तम् । अत्रत्यन्त्रतत्वंछायातोबोध्यं । यत्तुवि-भाषादिक्समासइति । सूत्रवल्लक्षणेति न्यायेननिर्वाह । इ-त्यनुवृत्यैव सिद्धेगुणवृद्धिग्रहणञ्चिन्त्यप्रयोजनमिति प्राञ्चस्त-त्खण्डयतिलक्षणेति तत्रपरिभाषायांगातिस्थेत्यादौपै इत्यस्या-ग्रहणायसाक्षाद्द च्चरिते । विभाषादिक् समासेतत्पुरुषेतुल्या-र्थेत्याद्यनुरोधेनाह । साक्षात्ततदिति शीघ्रोपस्थिति कत्वेनद्दयो-रनुगमइतिभावः साक्षादुच्चारितस्येति नन्वैवंसखीम ऽतिक्रा-न्तोऽसखिरित्यादावनङादिकंस्यात् प्रातिपदिकस्य कुत्रापिसा-क्षादुच्चारणाभावादितिवाच्यम् । साक्षादुच्चारितस्येत्यस्यगुणैर प्रापितस्येत्यत्रतात्पर्यादिति । वार्थादिति नच्चैवंगणयतीत्यादौ दीर्घेन स्थानिवदितिनिषेधःस्यात् वृद्धेरपिदीर्घत्वादितिवाच्यम् अनुस्वारदीर्घजशित्यत्रपूर्वोत्तरसाह चर्येणतच्छब्दविहितस्यैव-तस्यग्रहणात् ण्यल्लोपावितिवार्तिके पीयङादिसाहचर्यादन्य-तरोपादान उभयत्रनस्यादित्युभयोपादानमेवं वृद्धौत्वेत्यत्रा-

पि बोध्यम्। ध्वनितमिति अतएवत्क्तोधिकरणेचेत्यादि विहिते-क्ते निष्ठाप्रयुक्तकार्यं लटः शतृविहितयोःसत्कार्यम् शालादौ वृद्धकार्यं पचन्तीत्यादौ गुणकार्यं तत्रादिशब्देन यणोमयइतिरेफस्य द्वित्वंदीर्घपदाविहितेपि शालादीनामाकारदीर्घत्वेति गुरुत्वंहृस्वपदाविहितेपि देवदत्तादिपदघटकहृस्वे संयोगेगुर्विति गुरुत्वंच सिध्यति। अपास्तमिति विधीयतेइत्यध्याहारेच पुनर्गुणवृद्धोग्रहणमेव मानमितिभावः नचैवमपिसंपूर्णं पूर्वसूत्रद्वयाऽनुवृत्तिः क्रियते तत्रोभयानुवृत्तिसामर्थ्यादपेक्षितार्थोभविष्यतीति तद्वैयर्थ्यमेवेतिवाच्यम्। विधीयते इत्यस्याध्याहारेपि यत्रगुणपदमस्तिमिदेर्गुणइत्यादावऽतो गुणइत्यादौचयत्रचादेङऽस्तित्यदादीनामइत्यादावुभयत्रापिप्रवृत्तिसंपादनेनोभयानुवृत्तेः सार्थक्यात् । अचश्चेत्यत्रव्याख्यानेननिर्वाहेपि प्रकृतेतदाश्रित्यसिद्धप्रत्याख्यानेनासूयेति पंक्तिविंशतीतिसूत्रभाष्योक्त्यानचमत्कारकारीविधोपरीति। लिङ्गस्यविधेयविशेषणत्वेइत्यर्थः। पदस्यापिप्रकारतयाभानात्प्रकृतेनदोषइति बोध्यम्। अनुवादेपिप्रवृत्तिरिति। कर्मणिघञ्। अनूद्यमानविशेषणविशेषणत्वेस्वस्यलिङ्गस्येत्यर्थः। तेनेतिपदोपस्थापकप्रकृतपरिभाषाद्वयाऽतिरिक्तपरिभाषाणामनुवादेपि प्रवृत्त्यङ्गीकरणेनेत्यर्थः। प्रत्ययस्थेति आपीत्यस्यककारविशेषणत्वेपीत्यर्थः। इत्यादौनदोषइति। आदिनाल्लोपोनइति । तत्रयजादिनाऽनकारंविशेषयित्वाऽऽयाकारस्यलोपवारणंभाष्योक्तं विरुध्येतपरिभाषासत्वेइति बोध्यम् । स्पष्टार्थमेवेति परिभाषामङ्गीकुर्वतस्तत्रमतेविधीयते इत्यध्याहारेतात्पर्यग्राहकं प्रकृतसूत्रगुणवृ-

द्धिग्रहणमेवेत्यर्थः । न च ममविप्रावितिपरिभाषानित्यत्वबोधनार्थन्तत् । तेनोदात्तस्वरितयोरित्यादौ नदोषइति वाच्यम् । एवं सतितामनङ्गीकृत्यैवस्थानेग्रहणेनपरिभाषासामान्यस्यैवचानित्यत्वज्ञापनेन स्वाभीष्टस्यसाधयितु मुचितत्वात् । नन्वेवंपदोपस्थापकत्वेमिदेगु ण इत्यादौ दोषएव स्थानषष्ठीनिर्णयस्यैव गुणवृद्धिपदे विधेयसमर्पकत्वग्रहस्यापि वाक्यार्थबोधादनन्तरभावित्वेनालोन्त्यपरिभाषापेक्षयाऽस्याप्यन्तरङ्गत्वाभावादित्याशंक्याह । तत्रेति । वाक्यार्थबोधपर्यालोचनेपि विधेयत्वग्रहेप्रतिबन्धकाभावविशिष्टप्रथमान्तपदमात्रदर्शनेन तत्वज्ञानंसुलभमिति भावः । वृद्धिर्यस्येत्यादौ चयच्छब्दयोगस्य प्राथम्यस्यचप्रतिबन्धकत्वं बोध्यम् । प्राथम्यञ्चप्रथमान्तपदापेक्षयैव तेनगुणोयङ्लुकोरित्यादौ नदोषः । तेनन्वेच्छिद्यते इत्यादावनन्त्यकोगुणसिद्धिःपरस्त्रीपरशुञ्चेत्यादौतु प्राप्तत्वादिपर्यालोचनंप्रतिबन्धकं प्रथमायास्तत्वमेवेत्यर्थः । न तु प्रथमायामेवतत्वमिति । तेनपरशुमित्यादौ नदोषइति बोध्यम् । अचश्चशेषमिति पदोपस्थापकत्वंशब्दव्यापाराश्रयणं विधीयतेइति पदाध्याहारश्च तेनह्रस्वइति सूत्रेत्यदादीनामइत्यादौच्छेचेत्यादौच नदोषः । अन्यथापरत्वादलोन्त्यस्यप्रवृत्तौ चिच्छेदेतिनसिध्येत् । त्यदादीनामइत्यत्वमन्त्यस्यन स्यात् । श्रीपच्छत्रमित्यत्रैवतुक्स्यात् नदैवच्छत्रमित्यादाविति बोध्यम् । आद्यन्तौटकितौ । नैकत्रान्वयइति । विशेषणतयाविशेष्यतयानेत्यर्थः । आद्ये सविशेणत्वात् द्वन्द्वोनस्यात् । अन्त्येसाहित्याभावादेकशेषोन स्यादिति बोध्यम् । द्वन्द्वोनप्रा-

प्नोतीत्यत्र द्वन्द्वपदमेकशेषस्याप्युपलक्षणम् । परत्वादमुम्बाधतइति । नर्चाकिप्रत्ययउभयोरपि समावेशसम्भवाद्विरोधाभावेनविप्रतिषेधसूत्राप्रवृत्तावन्त्यत्वेनधातुत्व आश्रिप्रश्रिपइत्येत्यादावेरनेकान्तइति यणप्रसङ्गइति वाच्यम् । तेनतस्यैवावध्यवधिमद्भावस्यावयवावयविभावस्य चलोकतन्त्रविरुद्धत्वात् । प्रकृतसूत्रभाष्यन्त्वेकदेश्युक्तमिति बोध्यम् । नन्ववयविनःसूत्रेऽनुपादानादाद्यन्तपदाकांक्षितोऽवयवीकस्तत्राह । आद्यन्ताक्षिप्तइति । तदाकाङ्क्षितइत्यर्थः । यच्छब्दार्थइति । यत्रटित्कितौतत्राद्यन्तपदोपस्थितिरिति सूत्रार्थेनतत्रतत्रषष्ठ्यन्तस्यसत्वेन तदऽन्वयेननैराकांक्ष्यमिति भावः । इतावितिकिमिति । मत्वर्थीयेनिनाट्किताविति वक्तव्यं कुकश्चककारोनकार्यइति लाघवंपदलाघवंन्नधुडादौ टोच्चारणेनोपदेशेटकारवान् ककारवांश्चेत्यर्थइति प्रश्नःपर्यायेणेति टुकिटकारवत्वककारवत्वोभयसत्वेनोभयोरपि प्राप्त्याविरोधात् समावेशाऽसम्भवेनविप्रतिषेधसूत्रभाष्योक्ततृजादिदृष्टान्तेनेत्यर्थः । इदमुपलक्षणमप्रतिपत्तेरपि तत्रोक्तप्रेष्यदृष्टान्तेन तस्याअपि प्राप्ते र्वहिरङ्गे णसिद्ध्यतीत्यन्तः परस्मिन्निति सूत्रभाष्योक्तरीत्याऽनिष्टमेव तुनापादितमुभयोरपि विशिष्टापेक्षत्वेनतत्वाभावाच्च शब्दपरविप्रतिषेधाश्रयणेतुनमानमिति भावः । तदाश्रयणेतुशुषः कआदेश्वकःघान्तस्यटोराज्ञः कच्चखरिचवावसाने वाक्षडित्यादौदोषो बोध्यः । यद्वा तदपिमास्तुट्कावाद्यन्तयोः संज्ञइत्येवार्थोधुडादौन्नधुइति पृथक्पदंटइतिच आद्यं स्वरूपपरं नपुंसकं धुट्भवति धकारआद्यावयवइत्यर्थोयत्वचटिकादावुच्चा-

रणार्थष्टकारस्तत्राद्यादेशापत्त्यापृथक्पदत्वासम्भवस्तत्रकर्मधा-
रयोबोध्यः । परनिपातस्तु अनित्यत्वात्प्रकरणस्य पूर्वोक्तै-
र्जश्त्वरादिपदैर्विहितेतु नातिप्रसङ्गउच्चारितस्यैव प्रत्यायक-
त्वात् । तत्रत्वादौमध्येचतवकममकौठस्येकःकांतारकइत्यादौ
तत्रापि जस्त्वाभावेनसमासाभावनिर्णयेन नदोषोयत्रत्वादेश्चक
इत्यादावुच्चारणार्थवर्णसहितस्तत्रापि विशेष्यानुक्त्यादिर्भव-
तीत्याद्यर्थासम्भवेन परेश्चघेत्यादाविवव्याख्याने न त्वस्वरूपप-
रत्वमेवेति नदोषइति प्रश्नाशयःपर्यायेणेति विशेष्यानुपादा-
नेपि प्रकारतयोपस्थितस्वरूपस्यैवतत्वं स्यात् । तथात्वटुकि-
आद्यन्तत्वस्ययौगपद्यासम्भवेनटस्यैव पर्यायेणतत्वापत्तिः सं-
ज्ञिभेदान्नशब्दपरविप्रतिषेध इत्युत्तराशयःमिदचोऽन्त्यात्परः म-
स्यश्रवणार्थत्वेनापि सार्थक्यसंभवादाह । निर्देशेति । नन्व-
ऽक्षरसमाम्नायेऽचांमध्येऽन्त्य औकारएवेत्यऽतिप्रसङ्गोऽव्याप्ति-
श्चेत्यत आह । यस्यसमुदायस्येति । एतेन तस्यैवेतिद्वितीय-
तच्छब्देनपरामर्शात् । प्रथमस्यप्रक्रान्तत्वंबोधितम् । सौत्र-
मितिनिर्धारणविभक्तेः समूहवाचकादुत्पत्तेर्वक्ष्यमाणतयाऽत्र-
पदेएकशेषावश्यकत्वेनतस्यच समाहारद्वन्द्वविषयेऽप्राप्त्याबहु-
वचनं द्विवचनंचतन्न्याय्ये कारकेइति सूत्रस्थवक्ष्यमाण-
त्वस्यापूर्वार्थकल्पकत्वेमानाभावात् । एतेन तत्रतत्रसौत्रभा-
ष्यमपि न्यायसिद्धएवार्थेलिङ्गं समाहारद्वन्द्वे तुनिर्धारणवि-
भक्तेरिष्टापत्तिस्तु भाष्यकल्पनापेक्षयाप्रकृतनिर्देशेन तद्भाष्य-
स्य सप्तमीसङ्कोचकत्वमेवोचितम् । षष्ठीशेषइत्यस्यापिसङ्को-
चकल्पने मानाभावादित्यपास्तम् । यस्यविहितस्तस्यैवेति ।

अन्त्यांशस्तुनपरामर्शः ततःपरत्वस्य तदऽवयवत्वस्यचैकत्रविरुद्धत्वात् । न्याय्यऽर्थेलिङ्गमप्याह । अतएवेति । परग्रहणंकुर्वतः सूत्रकृतोपिसमुदायभक्तत्वमेवसंमतम् । अन्यथामिदचोऽन्त्यस्येत्येववदेत् । ननु तथैवास्तुकिमन्त्याजऽवयवत्वेसाधारणंदूषणमिति चेत् अजन्निष्ठधर्मस्यविशिष्टेऽतिदेशेनतत्तत्कार्यापत्त्यातत्रतत्रपरिभाषानित्यत्वप्रयुक्तं गौरवमितिगृहाण । इतिभावइति । तथाचवक्तुमुचितइति भावः । वस्तुतस्तूरण्रपरइति सूत्रेस्वयं वक्ष्यमाणरीत्यापरशब्दस्यैवावयववाचकत्वेनपूर्वनाभेः कायस्येत्यत्रैवान्त्याऽजवधिकपरत्ववान् समुदायाऽवयवोमिदितिसूत्रार्थः तदऽनुवृत्तिप्रतिपादकं सूत्रद्वयस्थभाष्यन्त्वेकदेश्युक्तमिति बोध्यम् । यद्वान्त्यपर्यायएकःपरशब्दःपञ्चमीप्रयोजकोदिग्वाचकश्चापरो नत्वेकस्यैवोभयार्थकत्वमुक्तभाष्यात् । प्रकृतेचपंचमीनिर्देशाद्दिग्वाचकत्वनिर्णयेनानुवृत्तेरावश्यकत्वमिति । प्रकृतसूत्रस्थसकलग्रन्थतात्पर्यम् । परशब्देतु अन्तपर्यायेबाधकाभावात्तथैववक्ष्यतेतत्सूत्रस्थभाष्यन्त्वेकदेशेस्वरितत्वप्रतिज्ञायाः क्लृप्तत्वादुपायान्तरपरमिति बोध्यम् । वस्तुतस्तु अनुवृत्तिपरसूत्रद्वयस्थभाष्यविरोधान्मानाऽभावाच्च पूर्वपरशब्दयोर्नावयवत्वांशेपि शक्तिःउरण्रपरइति सूत्रस्थावयववाचिनेत्यस्य वस्तुतस्तद्वाचिनेत्यर्थः । नतुतत्वेनेति । अतएवाग्नेऽनुनासिकात्परइति विहितस्यावयवत्वेमानाभावइति वक्ष्यते ऐचोरपिहरदत्तमतेनावयवत्वंवक्ष्यते पूर्वनाभेरित्यादौतु षष्ठीवाच्योऽवयवावयविभावइति बोध्यमिति सर्वमवदातम् । ननु समुदायनिरूपितत्वञ्चरमत्वोभ-

यविशिष्टावयवत्वस्यान्तपदार्थत्वेन विशिष्टस्यायोग्यत्वेपि अवयवत्वमात्रयोयोस्तुयोग्यत्वात्तत्राह । फलाभावादिति । तन्मध्यपतितन्यायेन वतत्वसिद्धेरिति भावः । विशिष्टाभिप्रायेणाह । अयोग्यत्वादिति । इत्यंशाऽप्रवृत्तिरिति । ननु विनिगमकाभावादन्त्याऽन्तःपरत्वांशस्यैव प्रवृत्तिरस्त्विति चेन्न । तद्बोधनवैयर्थ्यस्यैवगमकत्वात् । न च हलन्तेऽप्रवृत्तिरेव तद्बोधनफलम् । वा तावन्मात्रफलकत्वेसिदजन्तस्येत्येव ब्रूयादिति भावः । षष्ठीस्थानेयोगा । निरूपितसम्बन्धेति । सच विषयविषयिभावादिः । उक्तत्वादिति । स्थानस्यसम्बन्धत्वेतत्व्यधिकरणविग्रहप्रदर्शनमफलंस्यादिति भावः । अध्याहारइति । जगन्नाथपण्डितराजस्तु अस्यैवसप्तम्यन्तस्यस्थानेपदोपस्थापकत्वमाह । योगेति । कर्मणिघञ् सप्तम्यन्तस्थाने इत्यनुकृष्यस्थानेयायुज्यतइत्यर्थ इत्यादिना तद्दाननिपातनक्लेशइति बोध्यम् । प्रसङ्गइतीति सचाहार्यज्ञानरूपापत्तिरूपःस्थानित्वञ्च तद्विषयतापर्याप्त्यऽधिकरणत्वमादेशत्वञ्च तत्सत्ताज्ञाप्यसत्तापर्याप्त्यधिकरणत्वम् । यद्वाऽऽपत्तिविषयबुद्धिविषयतापर्याप्त्यऽधिकरणत्वंस्थानित्वम् । आपत्तिसत्ताज्ञाप्यसत्ताश्रयबुद्धिविषयतापर्याप्त्यऽधिकरणत्वमादेशत्वम् । अतएवाऽपवादउत्सर्गकृतमतिदेशेन प्रापय्यप्रकारान्तरेणवारितंभाष्ये । अथवास्थानपदान्वितत्वं स्थानपदार्थनिरूपितसम्बन्धवाचकप्रत्ययप्रकृत्यर्थत्वमिति यावत्स्थानपदान्वितसत्ताज्ञाप्यसत्तान्वयित्वमादेशत्वम् । अतएवस्थानिवत्सूत्रेकैयटेऽपवादप्रसङ्गस्त्विति प्रतीकमुपादायबुद्धिविपरिणाममात्रंयदि-

स्थान्यादेशभावइति भावइत्युक्तं तत्रयदीत्युक्त्वाऽन्यथोत्स-र्गकृतप्रसङ्गोनास्तीतिसूचितं तच्चतयोरुक्तलक्षणत्व एवसङ्ग च्छते । प्रसङ्गश्चेति । इहशास्त्रे गृह्यतेइति शेषः । सतिसंभवे-इति । सार्थक्यस्येति शेषः । अचःपरस्मिन्नित्यादौतु तद-ऽसंभवादऽनर्थकप्रसङ्गोपि गृह्यतेइति भावः । बीजमाह । अर्थप्र-त्यायनार्थमिति । अयंभावःनित्यत्वानुरोधेन तस्यैवसोऽन्तस्या पि तस्यस्वीकारेतत्वंस्यात् । पदस्यवाक्यस्यचनित्यत्वं तदवयव-स्यप्रसङ्गस्वीकारेऽनित्यत्वं स्पष्टमेव । तेस्तुरिति । इदञ्चनशा-ब्दं किन्तुफलितंसर्वत्रस्थानिवाचकादेशवाचकयोस्तदघटिते-लक्षणयेकारघटितस्योकारघटितइत्येवं क्रमेणैकरूपएवशाब्दो ऽर्थइति बोध्यम् । अतोनेति । तदघटितेलक्षणाङ्गीकारादेवेत्य-र्थस्तेस्तुरितिकल्पनादेवेतितुनार्थस्तेनपचत्वित्यादेः समुदाय-स्यानित्यत्वावारणात् । तत्कल्पनन्तुप्रत्ययादेरपिकल्पितार्थ-कत्वेन तन्नित्यत्वसंरक्षणद्वाराप्रक्रियानिर्वाहमात्रफलकंतत्व-न्यथासिद्धमन्यत्फलमस्ति पचतेःपचतु इत्यनेनैवतदनित्य-त्वस्यापिपरिहारात् । वृद्धिप्रसङ्गइति । स्थान्यादेशसमर्पक-योः स्ववृद्धिलक्षकत्वमिति भावः । इत्यप्यर्थइति । अपिनाल-क्ष्यार्थबोधात्पूर्वंभाविनइकारस्योकारेत्यादेः शक्यस्यसंग्रहः अतो नकिंचेति । चेनपौनरुक्त्यं इदन्तु बोध्यम् । प्रक्रियायैआव-श्यकतदघटितलक्षणयैव नित्यत्वस्यापिसंरक्षणे सिद्धेवृद्धिल-क्षकत्वस्यनिष्फलत्वात् । नहिवृद्धिलक्षणयापचत्वित्यादेः पद-त्वंसाधयितुं शक्यतइति । अतएवेति । शक्यार्थाङ्गीकारादे वेत्यर्थः । आदिनानपदान्तसूत्रपरिग्रहः । स्थानेऽन्तरतमः ।

विरोधादिति तुल्यन्यायात्तस्मिन्नित्यादेरपि संभवात्पदोप-पस्थापकस्यतत्त्वंसूचितम् । तमप्किमिति । येनकेनचित् सादृश्यस्यकेवलान्वयित्वादन्तरग्रहणसामर्थ्यात्प्रकर्षलाभेसि-द्धेतद्व्यर्थमिति प्रश्नाशयः । यथा स्यादिति । यथाज्ञापिते न्चारितार्थ्याभावेप्यऽणुदित्सूत्रीयाप्रत्ययपदस्य भाव्यमानपरि भाषाज्ञापकत्वं तथास्यतमपोप्यनेकविधान्तर्यसत्ताबोधकत्व-मित्युत्तराशयः तृज्वत्क्रोष्टुरिति सूत्रेक्रोष्टुरिति षष्ठ्यन्तमिति । भावः । स्त्रीपुंवच्चेत्यादौतु षष्ठ्याःस्थानेप्रथमास्पष्टञ्चेदंस्था-निवत्सूत्रेकैयटे तुन्नन्तात्प्रथमेत्यादिवक्ष्यमाणग्रन्थास्तु प्रकृ-तसूत्रप्रत्याख्यानेलोकन्यायेनसिद्धिरित्यभिप्रायेण नहितत्रापि यत्स्थानषष्ठीत्यर्थोऽस्ति सूत्रारम्भेपूर्वविप्रतिषेधवार्तिकस्थतृज्-वद्भावग्रहणस्य यथासाफल्यं तथातत्रैववक्ष्यते । तस्मिन्निति । पदार्थकइति । इदंचइति शब्दमपर्यालोच्यतत्पर्यालोचनेतु यथार्थस्तथावक्ष्यति स्वतन्त्रस्येति । अनुकरणस्येति शब्दपा-रतंत्र्यादस्यतत्वं तत्रतत्रतथार्थेन तद्रूपेणशक्तिग्राहकानपेक्ष-णेनवा । इत्यत्रेवेति । तस्मिन्तस्मात्पदघटितेएवेत्यर्थः । बोधनायेति । तत्सत्वेउपस्थित्यातस्यैव प्रकृत्यर्थत्वनिर्णयइति भावः । समानेति । इदञ्चनफलंपदोपस्थापकत्वेकिन्त्वाद्य-मेवेति बोध्यम् । पुनस्तस्येति । त्वर्थेपुनरिति विशेषेवाइति शब्दभावेसप्तम्याउपस्थिततरत्वेन प्रकृतेस्तदर्थकत्वमेव गृह्यते-ऽतस्तस्यतदर्थपरत्वेतात्पर्यग्राहकइति । एतेन शब्दपरस्यार्थ-परत्वमित्यस्य शब्दतात्पर्येणोच्चारितस्यार्थतात्पर्यकत्वमित्यर्थः । तच्चविरुद्धं एकशब्दोच्चारणविलम्बेतात्पर्यभेदाऽसम्भवादिति ।

परास्तम् । दिशिरुच्चारणइति । अवसानकार्येप्रत्ययलोपेप्रत्ययलक्षणविषयेचास्यबाधादेतदंशविकलैवेयमुपतिष्ठते । वस्तुतस्तूच्चारणार्थकत्वेफलाभावात्समानार्थकत्वेपिनक्षतिः । जनपदेलुबित्यादौ च औपश्लेषिकसप्तम्यऽभावादानन्तर्यबाधाच्च नदोषः । बौद्धमिति । अयंभावः । सामीप्यंपौर्वापर्यंचकालिकंदैशिकञ्चेतिद्विविधम् । तत्रायुगपदवस्थितानामेवेति शब्देयौगपद्यासम्भवेनद्वयोरप्यऽसंभवेप्येकबुद्धौ विषयतयाऽनेकेषामपियौगपद्यसम्भवः यद्यपि लोकेचैत्रात्पूर्वःफाल्गुनइति भिन्नकालिकयोरपिकालिकं पौर्वापर्यमस्तितथापि शास्त्रे तथावक्तुंशक्यं प्रत्ययनिमित्तककार्याणांप्रत्ययोत्पत्तेः पूर्वमपिकालिकतत्परत्वमादायप्रवृत्त्यापत्तौ बहूपप्लवापत्तेरिति स्पष्टंचेदं संहितासंज्ञासूत्रेभाष्यकैयटोद्योतेषु कर्तृकर्मणोरिति । प्रत्ययलोपेप्रत्ययलक्षणमित्यत्राप्येवं तत्रपरसप्तमीत्वेव्यवहितस्यततः परस्यनकार्यंनस्यादिति बोध्यम् । निर्दिष्टपदमिति । उत्तरसूत्रएवनिर्दिष्टादितिकर्त्तव्यमिति भावः । यद्वा इहाध्याहृतोपश्लिष्टस्येत्यस्यैवानुवृत्त्याविपरिणामः । अधिकारश्चेति । तदऽधिकारत्रयम् । संज्ञासूत्रंचेति । एतेनेति। प्रत्याख्यानभाष्येणवहिर्भूतानामधिककालव्यवाये प्रवृत्तेरनिष्टत्वानुमानेनेत्यर्थः । अनडादीति । आदिनापदात्परस्य युष्मदाद्यादेशादयः । छन्दसीति । एतेनपरत्वव्यवहितार्थत्वं व्युदस्यति । अलोन्त्यस्यस्थानेविधीयमानइति । अलोन्त्यस्येत्यनेनतस्यावयवषष्ठीत्वकल्पनात्कथमिदं तस्मात्पूर्वसूत्रेषष्ठीपदस्य संभावितस्थानयोगकस्यसत्वात्तत्रापि तस्यैवानुवृत्त्याफलतीद-

ङ्कोभवतीत्याशंक्याह । विधीयेति परिभाषाणांफलविशेषस-
त्वएवप्रवृत्तिरित्येतल्लभ्यमाह । अल्समुदायेति । षष्ठीसमा-
सेनाल्बोधकसमुदायेत्यर्थः । नत्वस्यफलेऽभिनिवेशः कार्य्यः
परस्यस्थानेइति परत्वविशिष्टस्यस्थानइत्यर्थः । विहितविशे-
षणत्वादिति यद्यपि विहितपदाध्याहारे पंचम्युपपत्तयेपरशब्द
स्याप्यध्याहारइत्यङ्गसंज्ञासूत्रउद्योतउक्तम् । तथापि तत्रपरो-
योविहितइत्यर्थादुपलक्षणपरत्वम् । प्रकृतसूत्रस्यतुमुख्यविशे-
षणत्वेप्रवृत्तिरितिनविरोधः । इति शेखरेविवृतिसंग्रहेपरिभा-
षाप्रकरणम् ॥ इकोयणचि । संहितायाअविवक्षयानणुट् ननु
पूर्वेणापि संहितायाउक्तत्वात् । दधिआनयेतिप्रयोगानापत्ति-
रेकपदेतन्नित्यत्वेनधकारेणतस्याः सत्वात् । संहितायामित्य-
स्यविषयसप्तमीत्वेनविषयेइति पुनरुक्तत्वात आह । कार्येति
विषयभूतेतिच । अधिक्रियमाणविषयसप्तम्यन्तत्वस्फुटीकर-
णायसमानाधिकरणंसत्सप्तम्यन्तद्वयमिति भावः । विषयश-
ब्दोऽजहल्लिङ्गःपरिनिष्ठितेनरेखागवयन्यायेन बोध्यम् । बोध-
कंशब्दस्वरूपमित्यर्थः । एतेनेति । मुख्यजातिपक्षेयथासं-
ख्यसूत्रेणपरत्वाद्बाधात् स्थानेन्तरतमइत्यस्याप्रवर्तनेनेत्यर्थः ।
व्यक्तिपक्षेप्याह । स्थानतइति । अन्यानपेक्षस्वप्रयुक्तका-
र्यप्रवर्तकतयेतरबाधकत्वेनैवहितस्यप्राबल्यं वाच्यम् । तथा
सतितत्वंभज्येतेति भावः । नन्वेकत्रस्थानेऽनेकान्तर्यतो-
ऽनेकप्राप्तौ यत्नानेकविधमित्यस्यविषयोऽत आह । सप्त-
म्यन्तेति। अनचिचेत्यत्रचेदमे ओङ्सूत्रादाविति पाठः । तत्र-
हिसंध्यक्षरेषु तपरोपदेशइति पक्षेप्लुतादिष्वज्विधिरितिवा-

र्त्तिकं । अनच्चिच । अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोतीत्युक्तम् । आदिना हयवरट्सूत्रं तत्राप्ययोगवाहानामविशेषेण पाठपक्षे पञ्चफलीमध्ये द्वित्वरूपफलोपपादनावसर उ॰ ःक इत्यत्रानच्चिच अचः परस्य यरो द्वे भवत इति द्वित्वं सिद्धं भवतीत्युक्तम् । प्रकृतसूत्रेपि यणो मय इति वदता वार्त्तिककृतापीदं ध्वनितमिति व्याचख्युः । ननु शाकल्यमते द्वित्वनिषेधादेव रूपद्वयसिद्धौ वा पदानुवृत्तिर्व्यर्थेत्यत आह । शाकल्येति । एवञ्च तन्मतेऽभावघटितस्य साधुत्वेपि अन्यमते न स्यादतोऽनुवृत्तिरिति भावः । अन्ये त्वनुवृत्तिमपेक्ष्य लाघवादाहेत्यवतारयन्ति प्रसज्येति । अचः परस्मिन्निति सूत्रशेष उद्योते तु पर्युदासपक्षोपि समर्थितः स्थाने द्वित्वपक्षे लक्ष्यभेद इति खण्डनकाराद्युक्तिं खण्डयति । इदमिति । आष्टमिकं वर्णद्वित्वमित्यर्थः । पद इति । आदिना यणो मयः शरः खय इति षष्ठीत्वेति बहुव्रीहेस्त्वन्यत्रवीति । अन्यथा ह्रस्वो नपुंसक इति सूत्रस्थभाष्यविरोधेन तथा तत्रैवोद्योते स्पष्टम् । स्थानिवदा । अनल्विध्यस्य पर्युदासत्वे स्थान्यल्भिन्नाश्रयविधावित्यर्थे व्यूढोरस्केनेत्यादौ दोषो विशेषणन्तु खट्वाभिरित्यादौ ह्रस्वत्वानतिदेशेनैसादिव्यावृत्त्या चरितार्थं प्रकृतसूत्रे प्रतिषेध इति भाष्याऽसङ्गतिश्चात आह । न तु स्थानीति । प्रत्यासत्तीति तत्स्वरूपन्तु प्रकृतसूत्रस्थभाष्यप्रदीपोद्योतेषु स्पष्टम् । वस्तुतः फलानुरोधाल्लाघवाच्च पर्युदासोऽयं भाष्यन्तु फलितार्थकथनपरमत एव शास्त्रीये कार्य एव तत्प्रवृत्तिस्तथा च तस्य तत्त्वेऽयं सूत्रार्थः पर्यवसितो नल्वृत्तिधर्मत्वेन स्थानितावद्वृत्तिकोऽनल्मात्रावृत्तिरल्मात्रावृ-

तिधर्माऽघटितश्चयोधर्मस्तदाश्रयेतद्वृतिरुक्ते तरधर्मानाश्रयेञ्च विधौकर्त्तव्येस्थानिवद्भवतीति मूर्द्धाभिषिक्तव्यावृतय इत्थम् । वृक्षस्तत्रेत्यादावति व्याप्तिवारणायाद्यधर्मविशेषणमत्रमानन्तु भोभगोइति सूत्रस्थंभाष्यमग्नहोदित्यत्रेकारस्येट्त्वेन स्थानितातस्यचेट्शब्देपिसत्वादनल्वृतित्वमिति तदऽतिदेशोभवत्येव ग्रहोऽलिटोत्यत्राऽनियमत्वेमानाभावेनाचश्चेत्यस्य परिभाषात्वेनानुपस्थित्ते रुपस्थितावऽप्यऽजभिन्नस्येटइडभिन्नस्याच्च इति वाऽर्थादिट्त्वेन स्थानिताभवत्येवावचावत्यं भाष्यंमानम् । एवं साम्नोइमेइत्यादावप्यौकारस्यौङ्त्वेनसातस्यचौट्इत्यत्रसत्वादनल्वृतित्वं तेनकार्यकालपक्षेस्वादित्वातिदेशेनभत्वेऽल्लोपोह्निर्वेन्नत्वातिदेशेप्रगृह्यत्वेच । एवंरामायेत्यादावेकारस्यङेशब्दवृतिङेत्वेनसेति सुप्त्वातिदेशोऽतिखट्ठोनिष्कौशांबिरित्यत्राकारेकारयोः स्त्रीप्रत्ययत्वेनाप्त्वादिनावासागोस्त्रियोरितिह्रस्वविधौप्रतिलक्ष्यंवाक्यभेदात्प्रतिप्रत्ययविधायकेविषयेऽनियमेपिटाबादिविषयकेषु तदऽभावेनाच्चश्चालोन्त्यस्येत्यनयोरनुपस्थितेरुपस्थितावप्युक्तरीतेर्वातेनाप्त्वादेरतिदेशः । अतएव हल्ङ्याबित्यत्रदीर्घग्रहणंङ्याब्ग्रहणेऽदीर्घइति वार्तिकंचसङ्गच्छते । आकारादिप्रश्लेषश्चातिखट्ठायेत्यत्राकारस्यसुपि चेति दीर्घविधावत्वेनस्थानित्वात्तस्यचाच्छब्दे पिसत्वादनल्वृतित्वं तपरसूत्रस्यतुतपरबोध्य इत्यर्थइति तद्वृत्त्याप्त्वातिदेशेयाडापइति स्यादऽतोङ्याब्ग्रहणेदीर्घइति वक्तव्यमित्यत्रत्यम् भाष्यंसङ्गच्छते । एतेनाद्यविशेषणेह्रस्वोनपुंसकेक्तुन्मेजन्तः स्थानिवदादेशेतिसूत्रभाष्यविरोधः तथाहि आद्यचातिखट्वार्थमऽति-

खट्वाइत्यत्रदीर्घएकादेशेसत्युपसर्जन ह्रस्वत्वमाशंक्यवहिरङ्गा-सिद्धत्वात्समाहितम् । त्वद्रीत्यात्वकारवृत्तित्वात् । ह्रीप्रत्ययत्वातिदेशएवनेति द्वितीयेतुआधर्येच्चिकीर्षवेकुम्भकारेभ्यइ-त्यत्रसन्निपातपरिभाषयाऽव्ययसंज्ञावारिता त्वद्रीत्याकृतत्वा-ऽनतिदेशात्प्राप्तिरेवनेति तृतीयेङ्याब्ग्रहणेऽदीर्घइति वार्तिके-ऽदीर्घइत्युक्तम् । तद्धिखट्वाइत्यत्रसलोपार्थमाप्त्वातिदेशाय-त्वद्रीत्याकृतेपि प्राप्तिरेवनेतीत्यपास्तम् । अतिखट्वार्थमति-खट्वाउभयत्राप्यकाराऽऽकारयोः सवर्णदीर्घविधौपूर्वत्वेन परत्वे नचस्थानित्वात् तस्यचानल्वृतित्वात् । आद्ये पूर्वान्तत्वेना-प्त्वस्यसुलभत्वाच्च । अन्त्येपरादित्वेन आप्त्वाच्चातिदेशस्य-निषेधोमासम्भाव्यतामित्यऽदीर्घइति विशेषणमित्युद्योतेस्पष्ट-मुक्तेश्च स्वरूपमित्यस्याविषयेतत्स्थानेति लौकिकन्यायेनसि-द्धेर्वक्ष्यमाणतथाकृत्त्वातिदेशस्यसुलभत्वात् । पूर्वस्मादऽपिवि-धौस्थानिवत्वप्रवृत्यास्थानिनिभवन्त्योःकृत्संज्ञाया आदेशेएव प्रवृत्तेश्च । अन्तरङ्गेकृत्त्वेवहिरङ्गगुणादेरसिद्धत्वेनाग्नीइत्यादौ प्रगृह्यत्वस्येव तद्बुद्ध्यादेशेसुलभत्वाच्च । एवमन्यदऽप्यूह्यं अन्यच्चेदं नन्वाद्यविशेषणेऽतोलोपइति सूत्रस्थभाष्यविरोध-स्तत्रहिण्यल्लोपयोरियङादिभ्यः पूर्वप्रतिषेधोवक्तव्योनवक्तव्यः सन्त्यऽत्रैतेविधयएतेषु कृतेषु स्थानिवद्भावाण्णिग्रहणेनग्रहणा ल्लोपोभविष्यतीति नैवं शंक्यमियङि अन्तलोप ⁀ प्रसज्येतेत्यु-क्तम् । तवत्वियङादिविधावल्त्वेन स्थानितेतिप्राप्तिरेवनेती-ति चेन्न । पञ्चमीसमासाभिप्रायकत्वादस्येदमेकदेशयुक्तमि-त्युद्योतेस्पष्टमुक्तत्वाच्च नन्वेवमपिकुमारीमिच्छन्कुमारीत्यत्रा-

क्रुत्सावैं तिदीर्घेहल्ङ्याबितिसुलोपोनस्यात् । अन्त्वेनस्थानि-
ते तिङीप्त्वाऽनतिदेशादिति चेन्न । अपरनिमितकत्वेनान्तरङ्गे
लोपेदीर्घस्यासिद्धत्वात् । पञ्चमीसमासेनस्थानिवत्त्वाच्च । न-
न्वेवमप्यपङ्क्योधावनमृगइत्यादौसिपोरुत्वेउरवेगुणेपूर्वरूपेचक्र-
तेतिङऽतिङइति निघातःस्यात् । सकारवृतितिङ्त्वस्यत्वन्म-
तेरेफेऽनति देशादग्रे प्ररोहासम्भवेनातिङन्तात् परत्वादिति
चेन्न । रुत्वस्यासिद्धत्वेनरेफएवमध्यगसादृश्यबुद्ध्यातिङ्संज्ञा-
याअग्नोइत्यत्रप्लुतेप्रगृह्यत्वस्येव पुनःप्रवृत्याऽग्रे प्ररोहसंभवात्।
एवमतृणेडित्यादौ हल्ङ्यादिलोपविषयेहल्त्वेन तत्वेपिसु-
प्त्वादिनापि स्थानितेतिस्थानिवत्वं प्रवर्ततएवेति बोध्यमिति
दिक् । रमाभीरामायेदमित्यादावत्वैत्वयोस्तथात्वादति-
देशऐसयादिश्चस्यादतोद्वितीयंधर्मविशेषणमत्रचमानमाऽऽका-
रप्रश्लेषेणङ्याप्ग्रहणेऽदीर्घइति वार्तिकप्रत्याख्यानपरं भाष्यं-
चान्यथाऽऽत्वादेरिवात्वेत्वयोरप्यऽतिदेशः प्राप्नोत्येवेति तदऽस-
ङ्गतिः स्पष्टैवाल्वृतिरित्येवोक्तौत्वाप्त्वेट्त्वयोरतिदेशोनस्या-
दऽतस्तन्मात्रइत्युक्तम् । अत्रमानम् पूर्वोक्तंभाष्यमुन्नेयम् । प्र-
दीव्येत्यादौवलादित्वातिदेशः स्यादऽनस्तृतीयंधर्मविशेषणम् ।
अत्रमानंविधिग्रहणंभाष्यञ्च प्रदीव्येत्यत्रैवतथाविधार्द्धधातुक-
त्वाश्रयत्वादिड्विधेतिदेशः स्यादऽतस्तद्वृत्तीत्यादिनाविधिर्वि-
शेषितोऽत्रमानंभाष्यप्रयोगादिकं यथायथमूह्यम् । क्षोदिष्यते-
त्येदं यथाध्ययनम् । अत्रेदमवधेयम् । लस्येत्यधिकृत्यविहि-
तेषु तिबादिषु लकारवृतिलिट्त्वादेरतिदेशोभवत्येवोच्चारणा-
र्थत्वेपिलत्वस्यानलवृतित्वानपायात् तेनचक्र इत्यादावादेशो-

त्तरं द्वित्वसिद्धौ रैवतिकादीयस्येतिलोपसिद्धिश्चठस्येकइत्यत्रवर्ण निर्देशस्यैवसिद्धान्तात् । अतएवकितिलिटिविधीयमानावे- त्वाऽभ्यासलोपौकृतार्थौ नत्वेवंवर्णनिर्देशत्वेऽल्विधित्वात् मा- थितिकेकादेशोनेतिठस्येकइति सूत्रस्थभाष्यविरोधइति वा- च्यम् । विशिष्टनिर्देशेऽपिठमात्रस्यैवोद्देश्यताबोधविषयत्वेनतस्य- चाल्मात्रवृत्तित्वादऽतिदेशाभावेनकादेशाऽप्राप्तेरिति स्थानि- भूतइति । व्यपदेशिवद्भावसिद्धमिदं स्पष्टप्रतिपत्तयउक्तं स्प- ष्टञ्चेदमऽत्रैवोद्योते । अतएवरेफेति । आद्यार्थाङ्गीकारादेवे- त्यर्थः । एवमेवाग्रे पुनःपूर्वेति लक्ष्येलक्षणस्येतिनात्रसंज्ञा- विषयेतदऽप्रवृत्तेःप्रगृह्यसंज्ञाप्रकरणेभाष्येस्पष्टत्वात् । तस्या- पीति । अभ्यासस्यानर्थकत्वादृऋइत्यस्याऽर्ऋइत्यादेशस्था- निवद्भावेनद्विरुक्तधातुत्वम् । पूर्वभागत्वत्वार्थसमाजग्रस्तम् । तथाज्ञानेति स्थान्यादेशभावज्ञानइत्यर्थ इत्याहुः । परन्त्वला- शास्त्रीयातिदेशोभवति । अन्येतु तत्स्थानापन्नेति लौकिक- न्यायेनाल्वृत्तिरपि पूर्वभागत्वस्यातिदेश इत्याहुरेवं ह्यभ्यास- त्वमेव कुतोनातिदिष्टमिति कैयटेनोक्त्वाच्चेति । नन्वेतत्त्वया- फलत्वेनकथमुक्तमिति चेन्न । पञ्चमीसमासानङ्गीकारकर्तृ- मूलमतेतत्सत्वात् । भविष्यतीत्याद्यसिद्धान्तरङ्गासिद्धत्वमि ड्विधौनेति तेनाप्यस्यासिद्धिरन्त्यफलमाह । प्रदीव्येति । अन्यथानल्पपीतिलिङ्गादऽशास्त्रीयस्यकित्वस्यैव बलादित्वस्या- प्यतिदेशः स्यादिति भावः । अतएवनप्रपठेरतीत्युक्तम् । ब- भूविवेति । यन्निमित्तेतिप्रत्यासत्तिफलंदातुङ्क्ष्टायेत्यस्यत्यागो ननु वलादित्वस्यवस्यापि सत्वात्स्यादेवनिषेधोऽतःप्रत्यासत्या-

प्रतिपादयति नहीति स्थान्यलिति स्थानितोऽल् तदऽसाधार-
णोधर्मोयस्मिन् तस्यभावेइत्यर्थेऽसाधारणेत्युक्तौरेफस्थानिकेति
पूर्वग्रन्थविरोधात् प्राचामनुरोधेनेत्येके द्वितीयार्थाभिप्रायेणे-
त्यन्ये वस्तुतस्तु शब्दतइति वक्ष्यमाणत्वेन तद्विरोधाभावात्
समानफलकत्वाद्व्युक्तैवसेत्यबोचाम अतएव प्रकृतसूत्रउद्यो-
तेयत्रशास्त्रे विशेष्यतयाविशेषणतयावाऽऽदेशस्य स्थानिभूतो-
योऽल्तत्स्थानसंबन्धीचयोल्तन्मात्रवृत्तिधर्माश्रयणं तत्रवि-
धौनिषेधइत्युक्तिः सङ्गच्छतेनहि तत्रद्वितीयार्थाभिप्रायकताव
क्तुंशक्यानतुभोभगोरिति सूत्रस्थभाष्यविरोधइति तन्न अ-
नुनासिकोकारघटितरुत्वस्य रेफमात्रवृत्तित्वेन रेफस्थानिकवि-
सर्गस्यरुशब्दत्वन्नेति भाष्यउक्तमिति नतद्विरोधइति दिक्।
स्वशास्त्रेणैवेति। इत्यन् तस्यबोध्यमिति वक्ष्यमाणेनान्वयः। अत
एवेति। अन्यथानेनदीर्घइत्येवब्रूयात् परत्वादिति तुगऽपेक्षयेति
बोध्यम्।कार्यमनेनेति। अथात्रायंसूत्रार्थ आदेशःस्थानिवद्भवति
सादृश्यंकार्यभाक्त्वेन कार्यभाक्त्वंच प्रयोगित्वनिमितत्वोभयरू
पंपूर्वपक्षेतुतन्निष्ठव्यवहारवत्वेनसादृश्यमिति नचान्त्यपक्षेरा-
मोरामस्येत्यादावतिदेशेन दीर्घःस्यात्। तथातिसृणामित्यादौ
त्रयादेशादिःस्यादुपदेशाऽप्रवृत्तेःसुप्त्वयञादित्वआमपरत्वलि-
त्वरूपनिमितवैकल्पप्रयुक्तत्वेन तन्निमितातिरिक्तनिमित-
त्वादतिदेशस्येति वाच्यम्। यद्यन्निमित्तवैकल्यप्रयुक्तयदुप-
देशस्याप्रवृत्तिस्तस्य तस्यनिमित्तस्यवतिप्रकृत्यर्थवृत्तित्वएवा-
तिदेशप्रवृत्तेः स्वभावसिद्धत्वात्। अतएवेति। अत्रैवेति पाठ
उक्तेरिति पञ्चम्यन्तस्याग्रे सत्वात् शास्त्रीयमेवेति तत्वंचशा-

च्चबोध्यतापर्याप्त्यधिकरणत्वं त्रित्वादेरतिदेशायविधेयतेतिनोक्तम् दुर्लभमिति नचाण्निमित्तिकाण्णन्तेसुलभेति वाच्यम्। प्रत्यासत्त्यासर्वनामस्थाननिमित्तिकायाश्चाश्रयाणान्नुम्विधौन त्वकार्यकालेअग्नीइत्यत्रेव यथोद्देशेपि वा औइत्यत्रपूर्वान्तवत्त्वेनाण्त्वं परादिवत्त्वेनसर्वनामस्थानत्वेन पुनःसंज्ञाप्रवृत्त्यात-न्निमित्तिकापिसुलभैवसेति वाच्यम् । एवमप्यण्विधाना-वधित्वस्यश्रेयसित्यत्रसत्त्वेन श्रायसमित्यत्रन्यायं विनादुर्लभ-त्वात् । नवानुमानिकेनस्थानिवत्त्वेन तल्लाभःश्रेइत्यस्याप्यऽर्थ-वत्त्वेन तस्यस्थानिधर्मत्वाभावादिति दिक् । परिच्छिन्नेति । प्रातस्विकरूपेणबोधितं परिमाणमानुपूर्वीविशेषोयस्यार्थस्य त-द्वाचकेत्यर्थः । तदऽभावादिति । ननु गङ्गाप्रविष्टनदीदृष्टान्त-सिद्धत्वेनाकोरिति प्रतिषेधज्ञापितेन यन्मध्येतिन्यायेनाक्तपरि-माणानां धात्वादिशब्दानांसङ्गमकेसाकल्ल्येयथा प्रवृत्तिस्त-थाश्वपुच्छदृष्टान्तसिद्धेन प्राग्दीव्यदितिज्ञापितेनानेनापितिङ्-त्वातिदेशःकुतोनेति चेन्न । वैषम्यादक्तपरिमाणानामधि-केप्रवृत्तिमन्तराकोरित्यादेर्नसार्थक्यं प्राग्दीव्यदित्यस्यार्थबो-धकत्वाद्यतिदेशेनसार्थक्यमिति नन्वेवमङ्गसंज्ञाचाप्यऽक्तपरि-माणानामित्यङ्गसंज्ञासूत्रस्थभाष्यादङ्गत्वस्याक्तपरिमाणनिष्ठ-तयाऽनतिदेशेश्चायस्ताविति पूर्वभाष्यंविरुध्येत । तथाजरात्व-वदुदकत्वाऽनतिदेशेद्वितीयं भाष्यंविरुध्येत तथा प्राग्दीव्यतो-ऽणितिसूत्र उक्तपरिभाषाज्ञापयित्वातेनैवपदत्वेसिद्धेपचत्वि-त्यादौ स्थानिवत्सूत्रोक्तमेकदेशविकृतोपसंख्यानञ्चोदितं त-न्नकर्त्तव्यमिति भाष्यकैयटादिकमपिविरुध्येतेति चेन्न । श्रा-

पसाविति भाष्येणाद्यस्यैकदेशत्वुक्तत्वात् । पूर्वोत्तरेतिपरिभाषयापूर्वमेव स्वरप्रवृत्त्याद्वितीयस्यापि तथात्वात्रूपान्यत्वाच्चेति प्रकृतसूत्रेभाष्यएवप्रत्याख्यानस्य दूषितत्वेन तृतीयस्यापितथात्वादक्तपरिमाण उक्तन्यायाऽप्रवृत्यसाधारणफलन्तुसजुषमाचष्टेसजू इत्यत्ररुत्वाभाव आनुमानिकस्तुनजुषोऽप्यर्थवत्वेनसजुष्त्वस्यस्थानिधर्मत्वाभावादित्याहुः । इदुदुपधेभ्योणिच्त्तुपरमनभिहितोऽन्यैरिति दिक् । तण्डुलेति सतितत्वेनलोपः स्यात् । ननु नादेशविधेर्नसइत्यत आह । आदाविति । तेनस्मिन्ननन्तसंग्रहोऽत्वहि सर्वस्मिन्शय इत्यत्रालुकिनलोपेपिसंज्ञाविधौतस्यासिद्धेन संयोगेगुरूसंज्ञायाःस्मोतीकारस्यप्लुतत्वेननोच्चारणस्यसार्थक्यमिति । प्रत्ययान्तत्वेपीति । कृतपूर्वसवर्ण आसित्यादावादिवत्वेनप्रत्ययत्वं तत आनुमानिके आनादौ स्थानिवत्वेनप्रत्ययत्वं तदन्तत्वंत्वऽर्थसमाजग्रस्तमिति बोध्यम् । विशिष्टातिदेशस्तुन अशास्त्रीयत्वात् । त्वापतिरिति । एवमऽचिनवमित्यादौ पित्वाऽतिदेशेपिङित्वापतिरिति बोध्यम्। स्थानिवत्वेनैवेति निष्ठात्वस्याक्तपरिमाणनिष्टतयाश्वपुच्छदृष्टान्तसिद्धेनासिद्धेरिति भावः । नच्चानिष्ठायामित्यस्यननिष्ठाव्यावृत्तिः फलंकिन्तु कृत्वेनसादृश्यग्रहणंतिङन्तव्यावृत्तिरेवेतिकथंज्ञापकतेति वाच्यम् । तन्मात्रफलकत्वेकृतीत्येववक्तव्यत्वात् प्रत्यज्येति।अस्यबीजमाख्यातशेखरतोवसेयम् लक्ष्यानुसारीति न च भृशादिसूत्रेऽन्वे रिति पर्युदासोज्ञापकइति वाच्यम् । अभूततद्भावेप्रवर्ततेनसार्थक्यात् । नह्यत्रतदेववक्तुंयुक्तं गौरवात् । नन्विदुदुपधेति सूत्रेऽप्रत्ययपर्युदासोज्ञा-

एकः नहिप्रत्ययावयवत्वं स्थानिवत्वाद्धारकं विसर्गेऽस्तीति न भिर्भिसिएकदेशविकृतन्यायेन अक्तपरिमाणत्वात् नापितत्स्था नापन्नेतिलौकिकेन प्रकृतसूत्रीयोद्योतोक्तरीत्याविभक्तित्व-स्येव प्रत्ययत्वस्यापि स्वंरूपमित्येतद्विषयत्वाविशेषात् । न च तदऽविषयःप्रत्ययावयवत्वमेवातिदिश्यतां तथा सतितथैवफलानां सिद्ध्याज्ञापकानुपयोगादिति चेन्न । उक्तार्थोज्ञाप्यता मसमर्थसमासोवेति संदेहेलक्ष्यस्यैवानुसर्तव्यत्वादिति भावः। अशास्त्रीयेति प्रत्ययान्तत्वेत्यर्थः । यातिरितिसिद्ध्यर्थंवरेग्रहण ज्ञापितसंभावितप्रत्ययत्वादिकमादायउवङिति प्रकृतेतदना-श्रयणेपियणेष्टं सिध्यतीत्याशयेनाह । यणिति । अन्यथेति मात्रनिवेशेतुभोभगोइति भाष्ययोजनैवतत्फलं बोध्यम् । अ-लव्यवहारेति नन्वात्रपक्षेऽशितीत्यत्रकर्मधारये तदादिविधिर्न-स्यादिति वाच्यम्। असत्यपितत्रेतिशकारेऽव्यवहितेपरइत्यर्थे-नशवादौ तस्यलोपइत्यस्यस्थानिवत्वात्तत्परत्वेन एशादौत्वेका रादिनाऽव्यवधाऽनेनेष्टसिद्ध्याबाधकाऽभावात् । अत्रपक्षआदे-चइति सूत्रस्थस्यात्रापि शप्शिन्द्रवतीति भाष्यस्यशबऽवयवइ-त्संज्ञकशकारइत्यर्थोबोध्यः । आदेचइति सूत्रस्थशेखरस्तूपा-ध्यायानुरोधी नन्वेवंदेवश्चोरइत्यादौ टिलोपस्यस्थानिवत्वाद्ध-ल्ङ्यादिलोपः स्यात् । तथाविमलदिवीत्यादौशलोपस्यतत्वा-द्धलिलोपः स्यात् । प्राचांमतेत्वऽनुबन्धमात्रवृत्तिधर्मवदुद्देश्य-केऽनल्विधाविति निषेधेनप्रवर्त्ततेज्ञापकसाजात्यादिति नदो-षइति चेन्न । ममापिहल्ङ्यादिसूत्रादिषुङ्याबादिग्रहणेना-नुबन्धमात्रावृत्तिधर्मप्रयुक्तं कार्यमनुबन्धादेशेनेत्यर्थंज्ञापने-

नादोषइत्याशयात् । अन्येतूक्तज्ञापकेनक्वचिदऽव्यवहारोपी-
तीत्येवज्ञाप्यते लक्षानुसाराच्चव्यवस्था एवं ह्युत्तरग्रन्थविरोधो
पिन अतएवोङ आपइत्यत्रभाष्येङितीत्यत्रयस्मिन्विधिरित्य-
स्यसञ्चारइत्याहुः । नन्वेवम् प्राचीनमतात्किंलाघवमिति
चेत्शृणुप्राचाहिनानुबन्धेति अनुबन्धकार्येतिलाश्रयमनुब-
न्धकार्येति क्वचिन्निषेधप्रवृत्तिरिति वा वचनत्रयोज्ञापनीया-
मयातत्द्वयोति ननु भाष्यस्यशेषपूरणेन व्याख्यानेकिंमा-
नमत आह । ध्वनितमिति । अन्यथाऽऽदेशेतत्कार्यमप्रा-
प्यतत्परिहारयत्नविचारोऽसङ्गतः स्यात् । ममत्वऽनेकाल्सू-
त्रेकृतत्वान्नासङ्गतिरिति भावः । अचःपर । अच्एवेति ।
इदंचप्रकृतसूत्रेभाष्ये स्पष्टम् । नागलोपीति सूत्रभाष्यंत्वे-
कदेश्युक्तिरिति तत्रैवोद्योतेस्पष्टम् । मारयतीति । इदुदुपधे-
भ्योणिचोऽनभिधानन्तुलुङ्श्चेतिणौचङीति सूत्रस्थोद्योतरीत्या-
इदं सामान्येनणिजऽत्रनेति प्रदीपरीत्यातुभवन्तमाचष्टेभावय-
तीति बोध्यम् । यलोपोनस्यादिति यलोपेनिषेधस्तुलोपाजादे
शएवेति बोध्यम् । दीर्घेनस्थानिवत्वमिति दीर्घविधौनिषेध-
स्तुलोपाजादेशएवेति भावः पूर्वविधिशब्दइति सूत्रघटकवि-
धिशब्दइत्यर्थः । सम्बन्धसामान्येति कर्मप्रत्ययान्तस्यतेनैव
तत्सम्भवात् कर्तृषष्ठ्यन्तेन तदऽभ्युपगमेतु पूर्वस्याव्यावृत्ति-
प्रसङ्गः कर्मषष्ठ्यातुनतत्संभवः भावंप्रतीति तद्विवरणेनाकर्मक-
त्वात् । षष्ठीस्थानेइत्यस्यतुनप्रवृत्तिः एकार्थीभावापन्नत्वात्
षष्ठ्यन्तस्यगुणानामिति न्यायाच्चेति भावः । कस्यचिद्विधेयस्या-
भावादिति न च यस्येतिलोपस्तथास्पष्टंचेदं तत्रैव प्रदीपोद्यो-

तयोरिति वाच्यम् । वार्तिकमतेकतोत्यादौ स्थानिवत्वेनप्राप्तगुणादिवारणायनलुमतेति सूत्रेबाध्यसामान्यचिन्तावश्यंभावेनाचः परस्मिन्नित्यस्यापि निषेधात् । आनुकितुनसःप्रत्ययैपरतःपूर्वकार्याभावात् वार्तिकोदाहरणस्य तद्रोत्येवदातव्यत्वात् नियमत्वमितिभाष्यमतेपि निषेधमुखेनप्रवृत्तिरिति पक्षेतस्या आवश्यकत्वाञ्चविधिमुखेन प्रवृतिरितिपक्षेपिश्वविष्टादिपरित्यागेनानुक्पर्यन्तं श्रावतोभगवत आनुकएवाभिप्रायविषयत्वात् एवंस्थितेञ्चिन्त्यमिति ब्रुवंतोमान्याः इतएवारुरुन्त्रेराह । प्रकृतसूत्रेपोति सोपीति ननु कर्तृ षष्ठ्यन्तपूर्वशब्देन भावार्थकविधिशब्देन समासेपूर्वत्वस्यविधानोत्तरकालिकस्य चाश्रयणेसंज्ञायां भाविपूर्वत्वस्याप्यऽभावात्तत्रकर्त्तव्येऽयंनस्यादिति संबन्धसामान्यषष्ठ्यासमासोविज्ञायतइति षडिकादेरपि सिद्धिरितिप्रदीपोक्तरीत्यासर्वेष्टसिद्धौमास्तुतन्त्रादिभाष्यश्चयथाश्रुतमेवास्त्विति चेन्न । अनाश्रीयमाणायामपि प्रकृतावतिदेशज्ञापनायद्वितीयस्यावश्यकत्वात्स्पष्टंचेदमत्रैव भाष्यप्रदीपोद्द्योतेषु ध्वनितंचेदं विधिग्रहणं स्वाश्रयनिरासार्थमिति प्रदीपप्रतीकएवाप्यर्थइति वदताउद्योतेज्ञापकान्तरेण तत्साधनेतुमास्तुतन्त्रादिर्ध्वनितश्चे दंकेचिदिति वदतातत्रैवोद्योते इदन्तुचिन्त्यम् । अस्तुकर्मसाधनएव ऐनेयेति सन्नियोगेतिपरिभाषयापूर्वसम्बन्धिनीनिवृत्तिर्विधेयेति नदोषः परिभाषायामतिदेशप्रवृत्तिस्तु वेतस्वानित्यत्रैकदेशविकृतन्यायेन रुत्वाभावायावश्यिकाऽपरविधावित्यादिभाष्यंत्वेकदेश्युक्तिरित्युक्तमेव वैयाकरणे आयादेशापत्तेश्च तस्यतत्त्वमिति यत्त्वत्रपञ्च-

मीसमासेनातिदेशप्रसक्तिमाशंक्यसमाहितमुद्योते ऐज्विधानसामर्थ्यान्नभवति स्थानिवत्वमितिपटेति तस्यायं भावः । सतिस्थानिवत्वेपदांतयकारवकारासम्भवेन विधिवैयर्थ्यात् । ऐज्विषयेतदऽप्रवृत्तिरिति एतेनादेशेपठनीयइत्यर्थं बुध्वागौरवादुत्तरत्रचारितार्थ्यादिदमसङ्गतमिति यद्दूयांचक्रुस्तदपास्तम् । नपदान्तघटितान्येति । इदञ्चफलकथनम् । न तु ज्ञाप्यशरीरम् । अन्यत्वधातुग्रहणे इत्यादिवदिति बोध्यम् । विसर्गादिसिद्धिरिति । अन्यथारुत्वेकृतएकदेशविकृतन्यायाऽप्रवृत्त्याऽपदत्वाद्विसर्गोनस्यात् कार्यकालमाश्रित्येदम् अन्यत्रतुरान्तेएवरुत्वासिध्योपदेशप्रवृत्त्यासिद्धमिष्टम् । स्पष्टंचेदमिति प्रकृतसूत्रेतुभावसाधनत्वमात्रं नतुप्रकृतंफलं ननु वेतस्वानित्यत्ररुःप्राप्नोति यथोद्देशेऽन्तर्वर्तिविभक्त्यास्वादिष्विति वाऽकारान्तेप्रवृत्तस्य पदत्वस्यैकदेशविकृतन्यायेनसान्तेसत्वात् । कार्यकालपक्षेप्युक्तन्यायेन तदादित्वमऽतिदिश्योपदेशद्वयेनसान्तेतत्वमिति तत्वकर्त्तव्येस्थानिवत्वंतुनाऽनेननिषेधात् अनेनचसाक्षात्परंपरया वासूत्रोपात्तप्रतिबन्धकं तत्प्रापकंचप्रतिषिध्यते स्थानिवत्वम् । तत्रचसाक्षात्प्रतिबन्धकं एषोयन्निति साक्षात्प्रापकंकानिसन्तीति परम्परयाप्रतिबन्धकं द्वेधासाधकप्रतिबन्धात् प्रतिबन्धकप्रवर्तनाद्वा आद्ये वेतस्वानित्यत्रपदसंज्ञाप्रतिबन्धकः सिद्धान्तेतु एतदुदाहरणंमृग्यम् द्वितीयेरलावित्यत्रप्रकृतिभावप्रवर्तनात्परम्परयाप्रापकं प्रतिबन्धकत्वात् यथासिद्धान्तेवेतस्वानित्यत्रमत्वरूपप्रतिबन्धकस्यसान्ते प्रतिबन्धाद्रुत्वप्रापकत्वमतिदेशस्य नचैवं षडिकासिद्धिः लोपविधानादिति पञ्च-

मैत्रच्चोद्योते स्पष्टम् । अत्रमानन्तु रुत्वापादकंभसंज्ञाऽत्रबाधिकाभविष्यतीति अथचेत्यादिच्चभाष्यमिति यथायथमूहनीयं स्पष्टंचेदमत्रैवोद्योते इति चेत्तत्रसिद्धान्तरीत्यासमाधते । अत्वपदेइति । प्रत्यासत्त्येति पदेइत्यत्वपरपदस्योपस्थितत्वात्तत्स्थएवादेशोगृह्यतेइति भावः । अत्रचाभ्यस्तसंज्ञासूत्रस्थं भाष्यंलिङ्गमपि तत्रहि यत्रखण्डद्वयश्रुतिस्तत्रैव संज्ञार्थमुभेग्रहणंकृतोन अतएवऐत्संन्नित्यादौ जुस्नेत्याशंक्यस्थानिवत्वाज्जुस्नभविष्यतीति नतदर्थन्तदित्युक्तम् । अन्यथाऐत्संन्नित्यत्रस्थानिवत्वनिषेधाज्जुस्स्यादिति तद्वारणायतस्यावश्यकत्वेन तदऽसङ्गतिः स्पष्टैव एतेनात्रपदान्तसाधकस्यापि पदान्तग्रहणेन ग्रहणमित्यत्रकिंफलमिति प्रश्नेद्विवितिप्रातिपदिकादाचक्षाणण्यन्ताद्धिच्विअश्वशब्देन समासेपदत्वेपिप्राप्तस्थानिवत्वनिषेधे उत्वेद्‌य्वश्वसिद्धिरिति फलंपरंप्रदर्शयन्तःस्वयंपरमशान्ताःपरास्ताःवेतस्वानिति । इदंच प्रत्यासत्तिमन्तरापिसिद्धम् तथापिपिपठोरत्रेति प्रत्यैषिषन्निवेत्यादौतु तत्फलंबोध्यम् । अतिरिक्तस्यैवेति धात्वऽनवयवोयःपदचरमावयवस्तद्विधायकातिरिक्तेत्यर्थः । तेनपिपठोरितिसिद्धः यद्वापदशब्देनात्रयस्य स्थानिवद्भावप्रतिषेध्यतेतादशादेश हेतुभूतप्रत्ययनिमित्तकपद संज्ञावत् गृह्यतेतेनतिरश्चः पिपठीःकल्पमित्यत्रापि नदोषःअत्रत्योत्तरग्रन्थविरोधश्चनेत्याहुः । शित्यस्यैवेति अतएवपदान्तविधिंप्रतिनस्थानिवदित्युपक्रम्यब्रह्मबन्धेत्यत्रजस्त्वं प्राप्नोतीत्युक्तम् । अन्यथाजश्‌पदेननिषेधस्यदुर्वारत्वात् । प्रकृतेविचारोनिष्फलःस्यादिति बोध्यम् । द्विर्वचनग्रहणादिति तत्प्रतिब-

न्यकप्रवर्तकातिदेशस्याप्यऽनेन निषेधाङ्गीकारादिति भावः । अदर्शनम् । शास्त्रतोऽनुबन्धादीनामर्थतोल्यबन्तइति बोध्यम् । उभाभ्यांप्रसक्तिंदर्शयन् प्रत्ययलोपविषयेनिषेधएवकुतोनेत्याशङ्कांदूरीकुर्वन्नाह । तत्रेत्यादिना यथाश्रुतेत्वाश्रणायलोपावश्यकत्वेन प्रत्ययलक्षणार्थमित्यस्यासङ्गतिः प्रसक्तस्येतिकिमिति । इति तुनेतिशेषः कौस्तुभेपञ्चम्यापत्तेरित्येवपाठात् । तत्वेतु इति ग्रामस्यल्यबन्तार्थनिरूपिताधिकरणत्वेत्वित्यर्थः । दिगितिएङ्ह्रस्वादित्यत्रेव प्रत्ययग्रहणपरिभाषोपस्थानेनै तद्वारणेतुसोमसुत्त्रपुइति प्रत्युदाहर्त्तव्यम् । अत्रहिसुनोतोःप्राप्तस्यक्विपोऽदर्शनस्यसुनोतेरऽग्रे इवत्रपुशब्दादऽग्रे पि सत्वेनतस्यापि लोपसंज्ञायां प्रत्ययलक्षणेनत्रपुशब्दादग्रे पि क्विप्बुद्धिसत्वे न तद्बुध्यवधित्वस्य सुनोतावविवादत्वात् । तदादित्वस्यत्रपुशब्दान्तेसम्भवादक्षतिः कृदऽतिङ्सूत्रभाष्योक्तरीत्याधातुपदानुवृत्त्यातद्वारणेतुसोमसुत्पुत्रीयतीत्यादौ दोषोबोध्यः यत्तुविवरणेनियमाभावान्नपरिभाषोपस्थानन्तु विधावित्युक्तम् । तस्यायं भावः । सोमसुदाद्यर्थमावश्यके प्रसक्तानुवर्त्तनेनियमोनेति तेनैवत्रपुसिद्धिर्नान्यथेति भाष्याशयइति भाष्यानुयायित्वादुद्योतस्यासूयानविधेयाः ननु प्रत्ययलक्षणस्य नियमार्थत्वात्स्थानित्वेन तुगापादनीयस्तच्चापवादे उत्सर्गकृतवारणाय षष्ठीनिर्दिष्टस्यैवेति नप्रकृतेइति चेन्न । प्रसक्ताननुवृत्तावुक्तविषये एवविध्यर्थसम्भवेन नियमार्थत्वस्यैवायोगादित्यादिदिगऽर्थोबोध्यः विनिगमनेति भाष्यारूढत्वादित्यपि बोध्यम् । आकृतेरिति स्वरूपस्येत्यर्थः । चरितःकृतइत्यर्थः अ-

धिकमुद्योततोऽवसेयम्। नादिन्या। प्राधान्येति। अतएवपुत्र्यादिन्यां लिङ्गविशिष्टपरिभाषयानातिप्रसङ्गः नाव्यवहितातिरिक्तयव्यवायात् नान्तिचआदिन्याक्रोशेपुत्रस्येत्येव सिद्धेनद्वयोपादानं स्पष्टार्थमित्याहुः। आक्रोशएवेति। अत्राहुः श्रुतएवएवकारान्वयइति ब्रह्मभ्रूणेति सूत्रस्थोद्योताद्युक्तरीत्याद्यनियमएवयुक्तोनोचेत्तयोस्तस्मिन्पुत्रस्यैवेति तृतीयःकुतउपेक्षित इति चिन्त्यमिदमितित्रिप्रभृ। अतएवेति। विजातीयअर्हेत्रिप्रभृतीत्यस्यायमर्थोऽचःपरस्यत्र्यादिषुवर्णेषु मध्येयरोद्वित्वंवेति ततश्चहर्यनुभवेऽप्यऽनेनासिद्धौ किन्तेनेतीति भावइत्याहुः। अत्रतिस्त्रोऽसङ्गतयोऽचःपरस्यानेन प्रतिषेधस्तेनरहाभ्याम् परस्यविधिरिति क्वविषयेक्वयमित्यैकाशाकटायनमतेप्रतिषेधादन्यत्र तत्सार्थकयमित्यपराऽनन्तरत्वादनचिचेत्येव प्रतिषिध्यतेति तृतीयातत्रानन्तरस्यापवादत्वेपि परत्वादस्यापि बाध्यत्वमित्यन्ताशुद्धतरा पूर्वत्रासिद्धीयमद्वित्वइति निषेधादाद्ये त्वभिमानकल्पनमन्तरादुरुद्धरेतिमन्यते भाष्यसम्मतेति। उदःस्थाशस्छोटोत्युत्तरमऽभ्यासेचचेति प्रतीकधारणात्तस्य तत्संमतत्वमनुमीयतइति भावः। हलोयमां। अत्रपर्वयतेःपर्व् वातिशुक्रयतेःशुक्राति शक्लयतेःशुक्लाति चर्मयतेःचर्म् माति वृङंवृञश्चाम्रेडितेत्विच् वङ् ङवतेवञ् अवत इत्युदाहरणानिबोध्यानि वर्णयतेर्वर्ण् णिच्चमाहेत्यपि तत्रनपदान्ताहलोऽण इत्यनेनमोनुस्वारेण चकेषां चिन्निराकरणेप्यन्यानिनिराबाधानीत्याहुः। अवावौयोति। वान्तइति न्यासेवोपि व्यपदेशिवद्भावेन तदन्तत्वाद्धहः स्यादितिमन्यते। तस्यलो। विपरिणामेति लोपस्य-

कर्मसाधनत्वेतुनायम् । ह्रिगितिनन्वादिर्ञिट्टुनामिति न्या-
सेनव्यञ्जनस्योपदेशेऽजित्यऽन्वश्चेस्त्वेह्रितो ऽधुजित्यादावुभयतो-
ग्रहणेनसिद्धौ किन्तस्यग्रहणेनेति चेच्छृणुदित्वादुदितोवेत्य-
स्य प्रसङ्गःतत्कर्मधारयस्त्वऽशक्य उश्चनृदित्तृदिरित्यादीना-
मसंग्रहापत्तेरित्यादिर्दिग्ऽर्थोऽवसेयः वान्तो । मानाभावेति
ननु यथा वान्तपदेसामान्यतः श्रुतेविशेषाकांक्षायां पूर्वसू-
त्रपर्यालोचनं तथास्थानिजिज्ञासया वाक्यार्थपर्यालोचनमाव-
श्यकमिति चेन्न । स्थानिजिज्ञासायामेचइति श्रुतेनतस्याः
शान्तावपिविशेषस्थान्यंशेनिराकांक्षत्वेन तदऽलाभादित्याहुः ।
पदपर्यालोचनेऽर्थावगतिजातैवात आह । यथेति हलिसेत्य-
त्रवग्रहणासम्बन्धात्तस्यासिद्धत्वाच्चाह । लोपःशेतिविधेयवि-
षयश्चेति । अयंसङ्कोचोनिष्फल आद्ये नैवसर्वसामञ्जस्यंस्यादि-
त्याहुः। अन्त्यइति। उत्तरयोर्नित्यङ्कौटिल्येलुपसदेत्यनयोर्विग्रहेण
वृत्तिप्रतिपाद्यविशेषयोः कौटिल्यगर्हयोःशक्तिस्वभावेनासंप्रत्य-
यान्नित्यग्रहणमनर्थकं क्रियासमभिहारेतद्वारणायतदित्यपिन
गत्यर्थकात्तत्रापीष्टत्वेन लुपादिभ्यश्च यङ्वनस्वभावेनसमभि-
हाररूपविशेषाप्रत्ययेन तद्वारणस्य सुकरत्वादित्यादितिङ-
न्तशेखरेद्रष्टव्यमित्याहुः । धातोस्त । नयकोतितुनसूत्रि-
तम् जनाविसाधुर्जनौयमित्यत्रावादेशापत्तेरित्याहुः । मम-
तुतन्निमित्तत्वाभावाद्धातुसंशब्दनेन विहितप्रत्ययपरत्वाभा-
वाच्च नसः अतएव क्विवन्तभूशब्दात्तत्रसाधुरिति यतिभो-
यमित्येव औयतइति नन्वऽत्रापि वान्तादेशेवहिरङ्गयको-
ऽसिद्धत्वंरियतीत्यत्रयथेति चेन्न । एतादृशान्तरङ्गत्वस्यजा-

तद्बहिरङ्गासिद्धत्वनियामकत्वंनेति परत्वोक्तत्वात् । अतएव-वक्षीयत इत्यादौयकिदीर्घादिसिध्यतीत्याहुः । यद्यप्यत्रसूत्रे-धातोरादौतोश्चेदिति व्याख्येयंनियमस्यतत्रैव प्रवृत्तेस्तथापि तन्निमित्तस्येत्येकवचनानुरोधादेवमुक्तमित्याहुः । क्षय्यहिंसा-यामित्यस्याग्र इत्यस्येतिशेषः । अतोनाग्रिमद्विवचनासङ्गतिः क्षय्येत्यत्रप्रकृतिभूतयोरेककोटितया वा ननु सानुबन्धकत्वा-दऽयं नग्राहिष्यतेऽत आह । क्षैइति लक्षणप्रतिपदोक्ते त्यस्यतु नायं विषयःप्रतिपदोक्तानुपूर्व्यश्रुतेः व्याख्येति । ऐचोभावादि-त्यपि बोध्यम् । क्रय्यत्त । शाब्दमर्थनाह । क्रयार्थेवस्तुनोति व्याख्यानात् गुणेति तच्चतदर्थेतिविशेषणासङ्गतिरूपमत्रैव-सूत्रेप्रदीपोद्योतयोः स्पष्टम् । अत्रमतेक्रोणातिःक्रयार्थःक्रय्य ॥ स च द्रव्यदानपूर्वक धान्याद्यादानम् । एवंचक्रे तृकर्तृक्रिया-श्रयोधान्यमित्यर्थके क्रे तृभि॑ क्रय्यन्धान्यमितिसिद्ध्यति के-चिन्मतेतु सोत्रविक्रयःसचलाभेच्छया द्रव्यादानपूर्वकधान्या-दानमेवंचविक्रे तृभिः क्रय्यङ्क्रे तृभिःक्रेयमित्येव व्यवस्थित-मिति बोध्यम् । ननु विनिमयाश्रयत्वाविशेषाद्द्रव्येपि प्रयो-गद्वयं स्यादऽत आह । द्रव्येति । इदंचमतद्वयेपि बोध्यम् । स्व-रसेति क्रेथंनोधान्यं नचास्तिक्रय्यमिति प्रत्युदाहरणस्वरसे-त्यर्थः । आहुरिति । तस्यनमापियोजयितुंशक्यत्वमरुचिः । लोपःशाभोसगेति । अयंभावः गौर्यत्रेति व्यावृत्तयेऽपूर्वस्येति तावदऽनुवर्तनीयमेव व्योरित्यत्रापि ततश्चभोयच्युतोनसिद्धेर-दतोभोभगो इत्यपि स्वरितयितव्यं स्मृतवादीनामनभिधाने-भौतोगार्ग्यस्येत्यत्रासम्बन्धेदोषाभावेपि हलित्यत्रावर्णमात्रस-

म्नन्येदोषस्यस्पष्टत्वात् वस्तुतस्तु ओतोगार्ग्यस्येत्यत्रापि दोषए-
र्थः यर्थः शम्भोयर्थ इत्यलभो इत्याद्यनुवृत्तेरभावेलोपापत्तिरूपः
न च सगुणएवेति वाच्यम् । ओतोगेति सूत्रेभाष्येसिद्धेलो-
पेनित्यार्थमिदमित्युक्त तद्विरोधात् । अन्यथाऽप्राप्ते विध्यर्थ-
मेववदेदतएवतत्रवक्ष्यति भाष्यानुसारिणस्त्विति । एवं इश्च-
उश्चयूतदर्थंत्वर्थमित्यत्रलोपवारणाथ हलिसर्वेषामित्यत्राप्यु-
भयानुवृत्तिरावश्यकी एतेन तलोभयनिवृत्त्येष्टसिद्धिरित्यपास्त-
म् । दध्यानयेत्यादीनामिवेषामनभिधानस्यावश्यकत्वात् अ-
चिश्नुधातुभ्रु वांत्वोरिति निर्देशेनेष्टापत्तेः कर्त्तुमशक्यत्वादिति
ननु अशग्रहणानर्थक्यं नह्यऽत्ररुरस्तीत्यऽश्ग्रहणप्रत्याख्यान-
परसिद्धान्तभाष्येरुग्रहणादऽत्वसूत्रेरुसम्बन्धेन तत्स्थानिकय-
स्यैव लोपोनेन स्यात् । अन्यथाऽन्यत्राभावादित्युक्तोक्तरीत्या-
तन्नठ्यारूयत् कार्यिणोऽभावादिति वक्ष्यमाणरीत्यासामान्यत-
एवनदेदत आह । सतस्माआइति असम्बन्धइति । एवंचरुप-
दस्पलक्षणमिति न तद्विरोधइति भावः । यद्वाभोभगोइति
सूत्रशेषोद्योतोक्तं वृक्षवादिव्यावृत्तये हलिसर्वेषामित्यत्ररुपद-
सम्बन्धेन रुस्थानिकयस्यैवग्रहणमिति पक्षान्तरेऽत्रापिसम्ब-
न्धःस्यादऽत आह । सतस्मेति । क्विपित्विति णित्वःपूर्वभा-
विनमाश्रित्यतु नोठोवहिरङ्गत्वेनटिलोपस्यासिद्धत्वात् एतेन
केति । आद्यान्ययुक्तिद्वयेनपदान्तेति निषेधाप्रवर्त्तनेनेत्यर्थः ।
अन्यथावहिर्भूतसुपापदत्वात् स्यादेवेत्याहुः । ननु पदादिसं-
ज्ञायां यथोद्देशस्यैव सत्वात्कथंपूर्वत्रासिद्धत्वमत आह । सा-
क्षादिति । अन्यपरम्परावारणायाह । पदत्वादीति । आदि-

नामत्वम्। साक्षात्प्रतिबन्धकातिदेशोदाहरणं राज्ञिश्रुत्वेपदत्व-द्वारकपरस्परयाप्रतिबन्धकस्यतुपिपठीरिति उभयरीत्याप्रापक-स्यतूदाहरणं मृग्यम्ऽन्यथासिद्धम् तत्प्रतिबन्धकेति पाठः । नपदान्ताइति लण्सूत्रस्थभाष्यात्पदान्ताहलोऽणोनसन्तीति हेतोर्वृक्षवादेरनभिधानमेवेतियोजनातत्रहि भाष्येऽण्ग्रहण-सामर्थ्यात्पूर्वेणाणोग्रहणस्येत्यत्राण् अन्यथाऽच इत्येववदेदि त्युक्तम् । अभिधानत्वेषान्तदऽसङ्गतिः स्पष्टैवेति तत्रैवोद्योते स्पष्टम् । यथाश्रुतपाठस्यकौस्तुभे दूषितत्वादेवं व्याख्यायते अष्टमेकैयटस्याप्ययमेवाशयः। उक्तभाष्येति। उक्तार्थतात्पर्य-कभाष्यइत्यर्थः । उरण् ॥ लक्षणयेति । तस्यतत्रतात्वादि-स्थानबोधकत्वादिति भावः । वस्तुतस्तु आवश्यकस्वरितत्व-प्रतिज्ञकस्य षष्ठीस्थानेइत्यत्रस्थानपदस्यात्रानुवृत्तिः । एवंचा-धिकं स्वरितत्वंलक्षणाचन । तथा भाष्यंत्वेकदेश्युक्तिरिति । अत्रैवोद्योतेस्पष्टं । यद्यप्यारारादिरूपेण विधानेऽभक्तत्वादिश-ङ्कैवनास्तितथाप्यणमनूद्यरपरत्वमिति पक्षमाश्रित्यभाष्येपक्ष त्रयंचिन्तितमन्तग्रहणमनुवर्त्यपूर्वान्तत्वपक्षश्च स्थापित इति कौस्तुभंकटाक्षयन्नाह। रपरइत्यवयवेति। ननु रेफशिरेत्यादि-भाष्यमनूद्यरपरत्वमिति पक्षेणातद्गुणसंविज्ञानबहुव्रीहिणा-वासुयोज्यमिति चेन्न । प्रकरणविरोधादतस्तत्त्वत्यं कैयट-माह । स्थानइति न केवलमाकरग्रन्थविरोधएवापि तु ल-क्ष्यविरोधोपीत्याह । अतएवचन्नेइति । अभ्यासस्यनैरर्थक्या-द्यात्रानुमानिकादेशस्य स्थानिवत्त्वेनाभ्यासत्वलाभोऽर्धविकारा-द्यनैकदेशविकृतन्यायेनापीति भावः । यदित्ववयत्ववादि-

नाप्यत्रप्रक्रियाज्ञानवतामित्युक्तरीत्यैव पुनरभ्यासत्वंवाच्य-मिति ममापितद्रीत्यानोक्तदोषइत्युच्येत तदातुगीरित्यत्ररेफा-न्तधातोरभावाद् दोषोनस्यात्। आनुमानिकादेशावसरस्तुनप्रा-प्ताऽप्राप्तविवेकन्यायेनास्य रेफमात्रविधायकत्वेन तदऽननुमा-नादित्यत्रैवोद्योते स्पष्टम् । तथा साहिस्मतेंपिपरुरित्यादाव-भ्यस्तानामादिरिनि स्वरोपिफलम् । अन्यथारेणव्यवायान्न-स्यादित्यादिभाष्योक्तमनुसन्धेयमिति दिक् । यद्यपि भाष्ये-ऽन्तपदानुवृत्त्यापूर्वान्तत्वमुक्तं नपरशब्दस्यावयववाचकत्वेन तथापि अन्तपदस्यरेफेन्वयात्सौत्रसमासकल्पनामपेक्ष्येदंलध्वि ति भावः । अतएवपरादित्वपक्षोनाशङ्कितोऽत्रनियमानुपेति आन्तर्याविशेषेणत्रयाणामापत्तेरिति भावः । कौस्तुभंकटाक्ष-यति।अत्रपक्षेइति। सम्भवादिति । अयंभावः। अत्रापिपक्षेप्रा-प्तेति न्यायेनपूर्वान्तौरलौविधीयेतेतत्रांत्तरतमपदानुवृत्यान्तर-तमौतौभवतः साधारणधर्मस्तुअवयवावयविभावतादात्म्यान्य-तरसम्बन्धेनयोलकारवान् प्रसज्यप्रसञ्जकभावतादात्म्याऽन्य-तरसम्बन्धेन तत्संबन्धित्वम् । यद्वाऋस्थानिकाऽणः स्थाने-न्तरतमोरपरएवविधीयते सादृश्यन्तु प्रसज्यप्रसञ्जकभावता-दात्म्याऽन्यतरसम्बन्धेन लवत्सम्बन्धित्वमिति प्रतिपत्तिगौ-रवात्तूक्तम् सम्भवेति मूर्द्धादीत्यादिनांताःनकार्यमिति॥ अयं-भावः । यथान्यासेऽष्टौमात्रागुणादि संज्ञाविधौरलपरोच्चार-णेऽप्यऽष्टावेववर्धन्तइति यद्यपि समंऋतइदित्यादौ तकारेणरे-फोनुमेयइति सोऽपिसमएव तथापि आनङ्ऋतइत्यत्रनङ्योः प्रयोजनाभावान्नवक्तव्याविति लाघवमेवं लपरश्चेति वाक्यंन-

वक्तव्यमितिच्च तथा योगविभागाभावात्प्रतिपत्तिगौरवाभावो-
ऽलाघवमिति भृजामिदित्यादाविति । अयंभावः यथान्यासे-
विभर्तीत्यस्य हलादिशेषस्मृतिपूर्वकप्रयोगोभ्युदयोमिमिते-
जिहीत इत्यादेस्तु तदऽपूर्वकेप्यत्रन्यासेतत्रत्रपरोच्चारणे सर्व-
त्रापि तत्पूर्वकएवतस्मिन्सस्यात् । अरपरेतुविभर्तीत्यत्रापि
तदऽपूर्वकेसस्यादिति सनाथयिष्यतेनेदं ग्रन्थकृत्सम्मतिदानेन
आदिनाकृत उत्सर्वत्राऽदृष्टव्यत्ययश्च संगृह्यतइति दिक् ।
वस्तुतस्तु शङ्कायां तत्रतत्रेति वीप्सासत्वात् तदऽनुरोधेन
भृञामिदित्यत्रदोष उक्तस्सत्त्वसर्वादेशत्वापत् तिलक्षणः
सूत्रारम्भेतु सन्निपातपरिभाषयानमातुरित्यत्राप्ययं बोध्य-
इति । उरणोरगिति तु न सूत्रितम् । चाकर्तीत्यत्रा-
भ्यासस्यकित्वेन दीर्घोऽकितइति दीर्घानापत्तेः तत्प्रकरण-
स्थकितएवविसर्जनमिति वक्ष्यमाणंमाधवादिमतंतु नन्या-
य्यम् । मानाऽभावात् नुक्रीक्रिकुक् एषांसर्वेषांवर्जना-
नापत्ते र्बोध्यसामान्यचिन्तायो आवश्यकत्वात्सत्यभिधाने-
च्छायतइत्येव वस्तुतस्तु अकिद्ग्रहणस्याऽभ्या सविकार-
इति परिभाषाज्ञापकतापरभाष्यप्रामाण्येनाभ्यासनिमित्तक-
कितएवग्रहणमिति दीर्घोऽकित इत्यत्रोद्योते स्पष्टत्वादत्र-
न्यासेनदोष इति तत्प्रामाण्यात्तुहाकोहाङश्चानभिधानान्नय-
ङ्लुकावित्यप्युद्योते तत्सूत्रउक्तन्तदातुदोषइति ज्ञरोकैयटम-
तेनाह । ज्ञयेतिभाष्यसम्मतपाठ आह । वावसेति । उभयसं-
ग्रहायाह विकल्पइति । इत्यर्थकेनेति विध्यर्थतात्पर्यकेण न
तुद्वित्वेपूर्वत्रपरमसिद्धंनेत्यर्थकेनासमर्थसमासापत्तेरिति भावः।

पूर्वेहित्वेऽसक्कृज्ञत्वमन्यथा सक्कदेवेति प्रक्रियायांविशेषसत्वा-
दाह । रूपइति प्रवृत्तेरिति । आष्टमिकत्वर्णहित्वस्याहि:प्रयोगत्वे-
ऽप्यक्तिभेदेनत्वासक्कृत्प्रवृत्तेरित्यर्थः । परिभाषात्वेति वार्तिकत्वे-
पि परिभाषायावृत्तिकृद्भिस्तत्वेनोक्तत्वादिति भावः । एवंतु वि-
प्रतिषेधसूत्रस्यापि परिभाषात्वस्यैकेत्वात् विप्रतिषेधपदंकि-
मर्थमिति चेच्चिन्तयिष्यते यणोमयइति हित्वेचतुर्थमपि बो-
ध्यम् । अतएवेति । एवेनानुवृत्तिव्युदास इदंचानचीत्यत्रत्वेत्य-
स्यासम्बन्धपक्षेतत्सत्वेतु ततोपितत्वं बोध्यम् । कश्चिदिति
पूरणगुणेति सूत्रे सिद्धान्तयिष्यमाणरीत्येदमेवयुक्तं नत्वत्रास्व-
रसोद्भावनम् । जनोरित्यत्रसम्भवादाह । एत्येधत्योरिति । इ-
णेवेति । इणोकारादौप्रतिषेधइति वार्तिकारम्भात्सानुबन्धक-
त्वेऽप्यस्य ग्रहणमिति भावः । ननूभयोरस्त्विति चेन्न । आ-
रम्भप्रत्याख्यानयोः फलभेदापत्तेरित्याहुः । तीत्यादाविति ।
आदिनोपैधतइत्येवाशंक्यतदाशङ्कांहृदिनिधायेत्यर्थः । वि-
वेकइति । अतएवमूलेगुणस्यपरनिपात इणिनिर्दिश्यमानपरि-
भाषया इष्टसिद्धेराह । अत्रेति । ऐक्यरुप्यादाह । एत्येधत्यो-
रिति सूत्रे त्युपलक्षणं वार्तिकस्यापि आदेःपरस्येति कुतोनस-
माहितमत आह । यमेवेति परस्यैवविधानेतत्प्रवृत्तिरित्यन्ये
तत्रमानफलेमृग्येलक्षणसूत्रेति मकाररहितानुकृतिरेषा ऊठि-
संप्रसारणेति तत्संज्ञकेऊठीत्यर्थः । संप्रसारणपूर्वेतिपाठेतत्प्र-
युक्तपूर्वेत्यर्थः । अनभिधानेति ननु प्रत्याख्यानभाष्यात् वा-
र्त्तिकइण्पदमुपलक्षणमित्येव कुतोनेति चेन्न । एवंसति ।
अन्यत्रास्यार्थस्यानुक्तत्वेनात्रैव वक्तव्यत्वेन तदऽनक्याभ-

गवतात्रार्त्तिकक्रुदुपहासस्यान्यत्वाकरणेन चोपक्रमस्यप्राबल्ये-नात्तथादुर्वचत्वात् । निवृत्तिरिति तथासावकाशत्वेविप्रति-षेधशास्त्रबाधेमानाभावश्चेत्यपि बोध्यम् । पूर्वान्तवत्त्वयेतिपाठ-इत्याहुः । ननु पूर्वधातुसाधनेनेति नयेऽस्यसार्थक्येननथान्त-रेऽन्तरङ्गत्वात् । रूपान्तरंस्यादत आह । पूर्वधातुरिति पररू-पोद्देश्यतावच्छेदकाक्रान्तएववृद्धिप्राप्त्यानमूलासङ्गत्यावतरणं युक्तं यथाश्रुतस्यतुलक्ष्यासिद्धान्तत्वेऽवनयन्नाह । सिद्धान्तेति । तपरकरणेति यद्यप्युपक्रकारयतीत्यत्रप्रकृतसूत्रे एवफलंदे-यम् । तथापि परत्रैवफलप्रदर्शनपरवृत्तिप्रामाण्येनैधत्यादि-साहचर्याद्भ्वगणपठितस्यैव धातोरत्रग्रहणमिति भावः । भा-ष्यानुग्रहस्त्वत्रमृग्योवासुपीति पदच्छेदाऽभिप्रायेणानुकरण मिदम् । व्याख्यानादिति धातुग्रहणाभावेप्रर्षभवनमित्यत्राः-तिव्याप्तिदानपरप्रकृतसूत्रस्थभाष्यरूपादित्यर्थः । यथाहेति । लब्धमिति शेषःसमुदायादेशापत्त्यायथाश्रुतासङ्गन्तेराह । पूर्वे-ति । अन्त्याद्ययोरिति । अलोन्त्यस्यादेःपरस्येति परिभाषाभ्यांल-ब्धमिदम् । सिद्धान्तमतेनाह । उपसर्गेति तात्स्थ्यात्ताच्छब्द्य-मिति भावः । निर्दिश्यमानपरिभाषाज्ञापकत्वेन यथाश्रुतेमू-लंसङ्गच्छते लक्ष्येत्वनिर्बाधेकथं लक्षणावैयधिकरण्यगर्भित-स्यास्यौचित्यमिति चिन्त्यमेतत् । अन्तादिव । एकग्रहणप्रत्या-ख्यानादाह । इहपूर्वेति । क्वचित्त्विहैकः पूर्वेतिपाठोऽन्यथा वर्णवृत्तिधर्मस्यातिदेशस्स्यात् । समुदायनिष्ठस्य च न स्यात् । स्थानिपराविति । अवयवत्वेनबोधकाविति समुदायाक्षेपकत्वा-त्तयोः समुदायश्च पूर्वपरएवान्तादोत्व तत्स्थानिभूतावेवेति

भावः । अन्यथा कृतएकादेशेऽवशिष्टपूर्वसमुदायस्ययोन्तोव र्णभिन्नःतन्निष्टसमुदायस्यातिदेशः स्यात् । तथात्र परमपादस्य अःपरमपादाः तेनपरमपादाइत्यादौ विभक्त्यैकादेशात्प्रागेकादेशरहितपूर्वसमुदायान्तः पादितितद्धर्मातिदेशेपादःपदितिपद्भावः स्यात् ।अचःपरेतिस्थानिवत्वंतुन पूर्वमात्रविधित्वाभावात् । निर्दिश्यमानपरिभाषातुस्थानिवद्भावइवान्तवद्भावेपि नातएवखट्वे खट्वायाः खट्वयोरित्यादौ परादिवद्भावेन आप्त्ववत्वाकार आङिचापइत्यादिनैत्वसिद्धिस्तत्रस्थानिवत्वेनत्वाप्त्वन्दुर्लभम् । अनल्वृतिधर्मवत्वेनस्थानितावद्वृत्तिकत्वाभावात् । अतएव प्रकृतसूत्रभाष्येखट्वे त्यत्रपरादिवत्वेन हल्ङ्यादिलोपःसाधितइति भावः । तद्घटितेति । तदोभयोः परामर्शःपरस्यत्रसमुदायस्येति पाठः । विनापिचमन्यत्रेवसमुद्ययोवापार्थक्याभावउपमानस्यैवाभावात्सादृश्यासङ्गतेराह । पृथगिति । कृतैकेति । एकइत्येकादेशविशिष्टपरं प्रत्यासत्तिलभ्यंवातदिति भावः । न तु तद्वर्णेति ससहायेव्यपदेशिवत्वाऽभावेनवर्णस्य समुदायत्वाभावादिति भावः । मात्रवृतयइति । इदमुपलक्षणम् तदघटितानामऽदन्तत्वादीनामपि तेन खट्वाभिरित्यादावदन्तत्वातिदेशोपिनेति बोध्यम् । मात्रपदंसफलयन्द्वितीयार्थस्यफलमाह । तेनरामेति पूर्वमान्तेति । इदंप्राचीनवासनया व्यपवर्गानपेक्षणेनान्तादिवत्वाभ्यामऽप्यऽस्यसिद्धिः ननु यत्रपूर्वःपरोवावर्णःससहायस्तत्रोक्तरीत्यातद्वृतिधर्मातिदेशोमास्तुयत्रत्वसाहायस्तत्रतद्वृत्तेरपि धर्मस्यातिदेशइष्यतएवयथाशिवेहीत्यत्राङ्त्वं खट्वे त्यत्राप्त्वञ्च एवंचायज–

इन्द्रमित्यादौ न्यायसाम्यादिक्त्वादेरप्यति देशःकुतोनेतिचे-त्त्राह । अतएवेति । आदिवत्त्वेन । अन्तत्वेनतूक्तरीत्यात-द्ऽतिदेशोनप्राप्नोतीति भावः । प्रदीपकृद्रीत्यासूत्रंस्थापयति क्षीरेत्यादिनाभवत्येवेति कृतएकादेशेऽवशिष्टःपइतिपूर्वस्तच्चर-मावयवत्वातिदेशेयदागमन्यायेनोत्तरपदवत्वमेकान्त्वं स्वाश्रि-तमित्यर्थसमाजग्रस्तंतदितितद्भावः । अनेनविशिष्टातिदेश-स्तुदुर्लभोऽऌमात्रवृतिधर्मघटितत्वादस्याप्यऽप्रात रेनेत्यत्रपरा-दिवत्वेन विभक्तित्वंऽयपवगीनपेक्षणेनोभयत इत्यस्याप्रवृत्ते-रेकदेशविकृतन्यायेन तुनेत्यत्रतत्वंदुर्लभम् । अक्तपरिमा-णनिष्ठत्वाद्विभक्तित्वस्येत्याहुः । एकान्त्वंस्वाश्रितम् । उ-त्तरपदत्वमास्न्तु प्राथ्यतेतत्रचानऌविधाविति निषेधोदु-र्लभः स्थानिसम्बन्धिवर्णानाश्रितत्वादितिरीत्याप्रदीपस्योद्यो-तएवदूषितत्वाद्विधेरेवा प्राप्तत्वेननिषेधपर्यंतं प्रदीपकृतोधाव-नंऽयर्थमिति चध्वनयन्स्वरीत्यासूत्रंसफलयति किंचेत्यादिना अन्येतु समुदायस्येतीत्यन्तस्यमध्यमणिन्यायेनोभयान्वयित्वा-न्नैतल्लभ्यमित्यत्रहेत्वंतरमाहुः । भियइत्यादाविति । आदिनो-द्योक्तक्षीरपेणेत्यस्यसंग्रहःमनोरमादेः पूर्वापरविरोधं सूचयन् तन्मतेनाह किञ्चोभेइति । असङ्गताविति सूत्रसत्वेत्वन्तादि-शब्दाभ्यां पूर्वपरशब्दाभ्यांचविरोधस्य पुरःस्फूर्तिकत्वात्तदऽस-ङ्गतिरिति भावः । ननूभयतआश्रयेनस्थानिवदित्यपूर्वमार-भ्यतेतत्राह । इष्यतएवेति । दिगितिदिगर्थइण्धातुस्थशेखरा-दवसेय उपस्थितावपीति । अतूपक्षेपरिभाषादृष्ट्यात्रिपाद्यसिद्ध-त्वरूपप्रतिबन्धकाऽभावादिति भावः । कथमिति न च पूर्वत्र-

कर्त्तव्येपरासिद्धत्वेपितत्रकृते तदऽसिद्धत्वेमाभाभावइति पंचा- नामित्यत्रवक्ष्यमाणरीत्याजातगुणादेरसिद्धत्वमिति तथेतियु- ज्यतएवेति वाच्यम् । नभकुर्छुरामिति कुग्रहणेन पूर्वत्रेत्यस्य विषयसप्तमीत्वबोधनेन पूर्वदृष्टापरमसिद्धमित्येवतदर्थात् । अन्यथा कुर्वन्तीत्यादावुदितितपरत्वसामर्थ्यादेवगुणस्येवदीर्घ- स्यापि व्यावृत्तौ किन्तेनातएवचंचूर्यंत इत्यादौ दीर्घसिद्धिः अन्यथात्वंचूतीत्यत्रगुणस्येव दीर्घस्यापि उत्परस्यातइति तपर- त्वेननिवृत्तिः स्यात् । विसर्जनीयसूत्रस्थंभाष्यमपीहमानमु- त्तरग्रन्थस्त्वरुच्चितयानेष्यतइति दिक् । विनिगमनाविरहेति पूर्वत्रेत्यस्याधिकारत्वेनप्रागेवप्रवृत्तिः श्रुतत्वंत्रविनिगमकमपि बोध्यमन्यत्रोक्तम् । इमामेवेति । एवंहीत्याद्युक्तमिति भावः। लक्षणत्वादितीत्युक्तमिति पाठः । अनुसरणेति झलित्यप- कर्षस्याप्युपलक्षणमिदम् । दीक्षितङ्कटाक्षयति तत्संज्ञयेत्या- दिनानन्वन्तर्भूतक्रियायोगनिमित्तकोपसर्गत्ववति प्रर्षभादौ योऽतिप्रसङ्गस्तत्कङ्कायतदित्यत आह । यदर्थेति नन्वसतिधा- तुग्रहण ऋकारनिरूपितोपसर्गत्वस्याप्रसिद्धत्वात्प्राद्युपलक्षकं तत्स्यादित्यऽति प्रसङ्गएवात आह । प्रत्यासत्येति तन्निरूपि- तस्याप्रसिद्धत्वेपि तदघटितनिरूपितग्रहणं प्रत्यासन्नमिति भावः । कृतेपिधातुग्रहणेयदर्थैत्युक्तार्थस्यावश्यकत्वंध्वनयन्नृ- षभंत्यजतिऋद्धइति धातुग्रहणस्याटश्चेत्युतरार्थतायानमाङ्- योगेइति सूत्रेभाष्यउक्तत्वेनकथमिति दूषणाभासम्परिहरति प्रकृतसूत्रेति सुबन्तप्रकृतिकेति तत्प्रकृतिकक्यजादिघटितइ- त्यर्थः । सुवन्तावयवइत्येवकुतोनोक्तमत आह । शास्त्रइति

धातुप्रकृतिकत्वेनेति तत्संज्ञाप्रयोजकक्यजादिप्रकृतिकत्वेने-त्यर्थः । सूत्रे सुप्पदं लाक्षणिकमिति भावः । उपार्षभपुरुष-तीत्यत्र तु नित्यमेव वृद्धिः ननु आत इति सूत्रे वक्ष्यमाणरीत्या सु-बन्तोपश्लिष्टःसन्यऋकारादिधातूपश्लिष्ट इत्यर्थात् । सुबन्ता-वयवकधाताविरयर्थो न्यायसिद्ध इति लक्षणैवनिर्मूलेति चेन्न । तथा सतिसुबन्तधातूभयनिरूपितोपसर्गत्वस्य उपार्गित्यादौ सम्भवेनतत्रैवस्यादिति तुल्यास्यसूत्रभाष्यासङ्गत्यातस्यैवमा-नत्वात् । नहिसतिसम्भवेतद्घटितनिरूपितग्रहीतुमुचितम् । उक्तार्थे लक्षणावाऽवयवेलक्षणेत्यत्रभाष्यानुग्रहः परत्रिचन्त-नीयः ऋतीति सुबन्तविशेषणमित्युपर्षभीयतीत्यस्य सिद्धि-रित्युक्तंतद्खण्डयति ऋषभेति । ऋकारादेर्धातुत्वेनत्वदुक्ता-र्थासङ्गतेरित्यपि बोध्यम् । अत्रापिधाताविति । अतएवऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेनेतिवार्तिकं सामान्यतःसूत्रद्व-यविषयकतयाप्रवृत्तं धातावित्येतत्सामर्थ्यात्प्रत्याख्यातम् । ऋ त्यकइति सूत्रेभाष्य उपार्छतीति तदुदाहरणन्तुवासुपीत्युदाह-रणोपलक्षणम् । नमाङ्योगइति सूत्रस्थस्यधाताविन्त्युभयोः शेषइति भाष्यस्यतूपसर्गाद्वृद्ध्योरित्यादिरर्थइति भावः । विशेषाभावेनेति । इदमऽसिद्धवत्सूत्रेषु भाष्येस्पष्टम् । नदृश्य-तइति यत्तु औतोम्शसोरिति सूत्रउद्योतेकेचित्तत्रसूत्रेसु-पग्रहणमनुवर्तते वाग्रहणंनिवृत्तमिति भाष्यउक्तं तत्रनिवृ-त्तपदस्वारस्यापि स्वरितत्वमस्त्येव तत्फलन्त्वेङिपररूपमित्य-त्रानुवर्त्यवाक्यभेदेन व्याख्यानमित्याहुरित्याद्युक्तं तदऽरु-चिग्रस्तमिति स्पष्टमेव तथासत्यत्रनसम्बध्यत इत्येवब्रू-

यादुत्तरत्रावश्यकसम्बन्धस्य निवृत्त्ययोगात् निवृत्तस्यसम्बन्धायोगात् तस्मादननुवृत्तिरेव निवृत्तिस्तत्रभाष्यार्थइति तत्रैवोद्योतेस्पष्टं धातावित्यनुवृत्तेरिति ननु विश्वौहइत्यादौ संप्रसारणेगुणएज्लक्षणवृद्ध्यै वसिद्धावूड्विधानंवहिरङ्गपरिभाषांज्ञापयतीति वाहऊठ्सूत्रस्थभाष्यादुपसर्गादित्यस्य मण्डुकानुतावपिधातावित्यनुवृत्तिः किमर्थाइति चेन्न । तथा सति एङ्निरूपितोपसर्गत्वाप्रसिध्याप्राप्त्युपलक्षतामाभूदित्येतदर्थत्वात् । उचितंतूपसर्गादित्यनुवृत्तेरित्येव क्लृप्त्यादौ-स्त्यादिनामर्थः । अचौ । षष्ठीतिसौत्रमेकवचनम् । गमकत्वादिति सौत्रत्वादितियावदन्त्यपदस्यावयविनं प्रतिसाकांक्षत्वेपि निर्धारणावधिम्प्रत्यनाकांक्षत्वादित्याहुः । मृतण्डादागतइति भागवतादिप्रसिद्धमपिभवरूपार्थं भगवतोऽनित्यत्वप्रसङ्गात् त्यत् त्काआगतइत्युक्तमलमर्थः परिभाषेन्दुशेखरादवसेयःशब्दज्ञानानुपातीति पञ्चप्रयत्ने नावश्यंनिरोद्धव्यप्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपपञ्चवृत्तीनांमध्येविकल्पलक्षणमिदम् शब्दश्चज्ञानंचशब्दज्ञाने तेऽनुपातिनोजनकेयस्य सः श्रोतुःश्रूयमाणशब्दहेतुकः प्रयोक्तुःपदार्थोपस्थितिहेतुकोबाधनिश्चयेपि कलहादौशशशृङ्गादिप्रयोगाउत्प्रेक्षादौच सर्वानुभवसिद्धश्चवस्तुशून्योबाधितविषयः प्रत्ययोविकल्पाख्यावृत्तिरित्यर्थः । शब्दज्ञानेत्याद्युक्तेरित्यन्तस्य मध्यमणिन्यायेनोपयोगाऽभावेतादृशज्ञानसत्तायांच हेतुत्वेचान्वयोऽत्रव्याकरणेयत इति । शेषोवाइत्याहुः । सिंहावलोकितन्यायेनविशेषंवक्तुमाह । पतञ्जलिरितीति पतितइति । एतेनपतन्नञ्जलेरिति विरहन्रत्ना-

करः कटाक्षितोऽलडर्थस्यबाधात् । तल्लोपइति । इदमुपलक्षणंजश्त्वाभावस्याप्येवञ्चात्रगणेऽस्यपाठोऽनार्षइति भावः । यद्धेतशब्दस्यलोप इत्यत्राकारउच्चारणार्थ एवंचेद् भागस्यलोपेऽकारस्यत्वनेनपररूपेतस्यस्थानित्वान्नजश्त्वम् । अन्यथापाठोऽनार्षइति साक्षादेववदेत् । समासार्थंमयूरव्यंसकादित्वस्यावश्यकत्वेनपृषोदरादित्वकल्पनंकिमभिप्रेत्येतितुचिन्त्यम्। अन्येतुमयूरव्यंसकादित्वात्समासेऽत्वपाठादितशब्दस्य पररूपेऽर्द्धाधिकविकारेणपदत्वाभावात् । जश्त्वाभावेसिद्धमिदम् । नह्यत्वटेरित्युपातमस्तीत्याहुः । केचित्तुमयूरव्यंसकादित्वादेवातितशब्दस्यतमादेशमाहुः। ओत्वोष्ठ। ओष्ठस्यपरनिपातःप्रकरणानित्यत्यात् । समासग्रहणवैयर्थ्यंपरिहरति । अत्रसमेति वस्तुतस्तु तदुपस्थानेपि नतद्वैयर्थ्यङ्कालओष्ठीयितुंशक्तस्य ओष्ठीयितुमित्यादावुपपदेनक्यजन्तप्रकृतिकतुमन्तस्यैकार्थीभावसत्वेन तत्रातिप्रसङ्गवारणेन तत्सार्थक्यात् । तदऽयंभावः । अत्रतदुपस्थानेयत्रावर्णस्य ओष्ठादिनासामर्थ्यङ्कुम्भकारोष्ठ औपगवोष्ठइत्यादौ तत्रैव समासःस्यान्नतु दन्त्योष्ठशादौपदादेरकारस्यानर्थकत्वेन सामर्थ्याभावादिति समासविधावव्याप्त्यासर्वस्यद्वइत्यादावतिव्याप्त्याह । सुबन्तत्वेनचेति । इदंचाभ्युपेत्यवस्तुतःपदविधित्वं वस्तुतस्तदेवनेत्याह । ओत्वोष्ठादीति मात्रशब्दःकार्त्स्न्येभ्यामादौ तत्वैपिजसादिषु तदऽभावादिति भावः । अत्रचाभावेपि हेत्वन्तरतयैवव्याख्यानं सम्यक् वृहतितद्दर्शनात् । स्पष्टैवेति एवंचप्रयोगानुरोधात् । व्याप्तिन्यायाश्रयणमिति भावः । अन्यत्वप्रतिपदेति । अत्रयद्वक्तव्यंपरि-

भाषेन्दुशेखरविवृतिसंग्रहेतदुक्तं वक्ष्यतेचाग्रे पि। अव्यक्तानु।
अविद्यमानेत्यादिवहुव्रीहिपूर्वपदःकर्मधारयः। इत्याहेति। इत्या-
शयेनाहेत्यर्थः । अतइतिकिमिति । इदंचिन्त्यम् । तदऽभावे-
विशिष्टानुकरणस्यादेशः प्राप्नोतीति प्रश्नस्यनिरालम्बनत्वात्
इष्टस्यैवासिद्धेः मूलेपटितीति।अत्रैकदेशविकृतन्यायेनपदत्वाज्
जश्त्वंनाचःपरेति स्थानिवत्वादज्झलस्थानिकत्वेपि अजमा-
त्रस्थानिकत्वात् कृष्णर्द्धिरित्यादा ऋवर्णस्थानिकत्ववन् नप-
दान्तेतिनिषेधस्तुपरपदमात्रस्थाजादेशएव अतएवघटानयन-
मित्यादौ जश्त्वादिनेत्याहुः । नाम्रे । अतइति चेतिचेनेतावि-
ति सूत्रमनुवर्त्ततइति तद्वक्तव्यम् । फलकल्पनेति नाम्रे डि-
तेत्यंशस्यान्वाचयशिष्टत्वज्ञापन द्वारावटक्वटक्इतीत्यादौ पर-
रूपमन्त्यस्यभवतीति फलकल्पनाभिनिवेशइत्यर्थः । तस्यप ।
सिद्धेरिति पूर्वोभ्यासइत्यत्रैवेति भावः । अन्योत्पेक्षितं फल-
मन्यथासाधयति अन्यदिति। तस्यसंज्ञायां शूद्रमविभइत्यादौ
आम्रे डितंभर्त्सनइति प्लुतापत्तिरित्याहुः । तस्यग्रहणाभावे-
क्षिप्रक्षुद्राणांपरमित्यादिनिर्देशादवयववाचियोगेषष्ठीति बो-
ध्यम् । जलाक्ष । निवृत्यर्थमिति स्कधोग्रं हणंतत्सम्बन्धेपीत-
रव्यावर्त्तकमिति निवृत्तिबोधनेसमर्थनम् । अतएव दधस्तथो
श्चेतिसूत्रेभाष्येझलीत्यनुवर्त्यतथोश्चेति प्रत्याख्यातम् । झली-
तिमण्डूकप्लुत्यानुवर्तत इति तत्सूत्रीयोद्योतस्तुपक्षान्तरपरः
तत्सामर्थ्यात् तन्निवृत्तमिति वक्ष्यमाणमूलन्तुसूत्रमतइति बो-
ध्यम् । तदनुवृत्तिस्तु क्विन् प्रत्ययस्यकुरित्यादावनिष्टार्थैवस्या-
दिति भावः । नन्वेवंक्विन्प्रत्ययस्यकुरन्तइति न्यस्यतांप्रकृ-



तेनझलीत्यस्यसम्बन्धोस्तु एवंचझशिविधायकंमास्तु खरि-तुचत्वेंननविशेषः । ह्वेपरेपदान्तोझल्त्वसम्भव्यभ्यासेचर्चैत्या-दिचतुः सूत्रीत्विहैव पाठातवैववाजश्पदं झलामितिचनक-र्तव्यमिति चेन्न । तथासतिसुध्युपास्य इत्यादौ द्वित्वस्या-सिद्धत्वेझलोझल्परत्वाभावेन जश्त्वानापत्तेः षट्स्वित्यत्रेवशु-ष्कइत्यत्रजश्त्वापत्तेश्च खरिचर्त्वस्यझलि जश्त्वापवादत्वेतुपक्षा-द्वौ दोषावो ऽयः । ननु झषस्तथोरिति सूत्रे भाष्ये ऽत्रत्यान्तइ-ति योगविभागमाश्रित्यतत्रत्यमधइति प्रत्याख्यातंतत्कथंतस्य झलीति निवर्त्ततेसामर्थ्यमिति चेन्न । तदभावेपिजश्झलामिति योगविभागेन तत्प्रत्याख्यानसम्भवादिति दिक् । अकःस । अद्-वादितिबाधकसाम् यान्निषेधे ऽप्यपवादव्यवहारः । अइउण्सूत्रे-ति ऋलक्सूत्रानन्तरम् पठतोरत्नाकरस्याशयश्चिन्त्यइति भावः । नपरत्वमिति । अनयोरयोगवाहत्वमङ्गीकुर्वत ऽ कौस्तुभकृतो-मतेतुरपरत्वापत्तिस्तेषामिकारात्प्राक्पाठादिति भावः । वि-वृतत्वसाम्येन रेफवत्तासाम्येन चेत्यन्यतरोक्तावीषत्स्पृष्टऋ-कारोपि स्यादिति भावः । प्रत्याख्यातमिति द्विमात्रत्वाभा-वेदीर्घसंज्ञाभावात्तदसङ्गतमेव स्यादिति भावः । व्यवस्थासि-ध्यतीति ननु लकारवृतिपूर्वोक्तरीत्याविवृतत्वरेफवत्त्वसाम्या-द्विवृतऋकारईषत्स्पृष्टलकारवत्वसाम्यात्स्यात् । ईषत्स्पृष्टऋ-कारस्तु रेफवत्वसाम्यात्प्राप्नोतिनान्तरतमइति कथं सङ्करप्रा-प्तिरिति चेन्न एकरेफवत्वेहु करीत्यारेफवतिलकारवति चा-स्याप्राप्त्याक्षरसमाम्नायेपाठसामर्थ्येन भवन्नव्यवस्थयास्यादि-त्याशयात् । द्विरेफत्वेतुसामर्थ्यविरहेणनसङ्करइति भावः ।

यद्वास्थानेन्तरमइति सप्तम्यन्तपाठेद्विरेफवत्वाभावेसङ्करःप्रा-
प्नोति यथाहोतृल्कार इत्यत्रैकरेफवत्वाद्धोतृऋकार इत्यत्र-
लकाराभावत्वादन्यतरगुणकृतान्तर्यमादायोभयत्रापीषत्स्पृष्ट-
प्रवृत्तेरिति । अभितइतीति । अभितइत्यस्ययद्यप्युभयत-
इत्यर्थस्तथापीहसर्वतइत्यर्थो बोध्योऽतएवभक्ते रित्येकवचनं
सङ्गच्छते सामर्थ्यैरिति । इदंचिन्त्यम् द्वन्द्वइति शब्दद्व-
यप्रवेशः कथमिति शङ्कासमाधानयोरकरणेनेत्यर्थकैकदेशेष-
ष्ठ्यन्तद्वयार्थस्यान्वयमभिप्रैति नन्वेवमादितस्तद्भागोस्तुपरत-
स्तुतत्सत्वेकिंमानमत आह । यत्तादिति रेफात्भक्ते रित्येतेसमा-
नाधिकरणपञ्चम्यौरेफरूपभागात्परं यत्तेनव्यवधानादित्य-
र्थः । हयवरट्सूत्रस्थेत्यपपाठएओङ्सूत्रस्थत्वादस्य । भा-
ष्येणत्वेति चेनकुलङ्कतृ रमत इत्यत्ररोरीत्यस्य लकारइत्यत्रय
णोमयइत्यस्यच शङ्कासमाधानाकरणस्यसंग्रह आरम्भप्रत्या-
ख्यानयो⁀फलभेदंभञ्जयत्यत्रेत्यादिनाऽनयोरित्यर्थः। ऋतीति
तपरकरणेति । इदञ्चन्यायसिद्धमपिभङ्ग्यन्तरेणोक्तम् । लृती-
ति । अन्यथाऋतिऋलृवेत्येवब्रूयादिति भावः । पूर्वस्यह्रस्वत्वे-
मानमाह । तुल्यास्येति वार्तिकस्यतद्द्वयस्यान्त्यत्वंवक्ष्या-
मीति तृतीयस्यचेत्यर्थः । वैयर्थ्यापत्तेरिति । इदञ्चवाशब्दश्चा-
र्थइतिमते स्पष्टञ्चतस्यतदर्थकत्वन्तुल्यास्यसूत्रस्थभाष्यप्रदीपो
द्योतेषु विकल्पार्थत्वेतुदीर्घेत्यनुवृत्त्यैवसिद्धौविधेयनिर्देशस्यवै-
यर्थ्यंबोध्यम् । एतेनविवृतत्वेपिनित्येप्राप्ते विकल्पार्थंवचन-
न्तेन पक्षेयणादेश⁀फलमिति परास्तम् । एङः पदां। भवतीति
ननु भवतेरिति निर्देशोपष्टम्भेनापदान्तात् ङसिङसोरेवेति

नियमात्सिद्धमिदमिति चेन्नानुबन्धादौ चेत्तयोरेवेति नियमऔपगवासिद्धेः वर्णकातान्तवेनु गवमायामइत्यादिनिर्देशाश्रयणेपि शस्भिन्नेचेत्तयोरेवेति नियमापत्त्येरेशब्दस्यशसिइरयङ्इत्यस्यासिद्धिरेवेति भावः। प्रतिपत्तिगौरवन्तुस्पष्टमेवोत्तरार्थमस्यावश्यकत्वादन्तग्रहणं स्पष्टार्थमेङन्तात्पदादित्यर्थेऽप्यलोन्त्यपरिभाषयासिद्धेः सर्वत्रेत्यादावपि प्रत्यासत्त्या-सिद्धेः।अवङ्स्फो। अयनम्परायणंप्रतिपाद्यमिति यावत्कस्तस्येत्यर्थइति पाठः। स्फोटायनीवङ्स्मर्तेति विभाषापदानुवृत्तेस्तस्योभयस्मारकत्वाच्चिन्त्यमेतदतएवप्लुतप्रगृह्या ति सूत्रेनित्यग्रहणङ्किमर्थं विभाषामाभूत् पूर्वस्मिन्नेवयोगेविभाषाग्रहणंनिवृत्तमिति भाष्येपूर्वस्मिन्योग इत्येकवचनंसङ्गच्छते निवृत्तपदस्वारस्यञ्च तत्रकैयटोपि पूर्वस्मिन्निातीन्द्रे चेत्यत्रेत्यर्थइति व्याख्यत् तत्रोद्योतेप्यारम्भसामर्थ्यादितिभाव इत्युक्तम्। अतएवसामर्थ्यान्नित्यमित्युत्तरग्रन्थसङ्गतिः। स्फोटायनग्रहणस्य पूजार्थत्वेहितत्सङ्गच्छते ऽन्यथामतान्तरेतस्मिन् तत्सिद्धयेतस्यावश्यकत्वात्तदऽसङ्गतिः स्पष्टैवभाष्यादाविति यद्यपि कण्ठरवेणभगवतानैवमुक्तन्तथापि पूर्वस्मिन्नेवनिवृत्तमिति निर्हेतुकं वदन्नुक्तं हेतुप्रसिद्धत्वादभिप्रैतीति भावः। उक्तभाष्यस्ययोगविभागसामर्थ्यान्नित्यमित्यभिप्रायकत्वेनापि सुयोजत्वादुक्तमादाविति। तेन वृत्त्यादिपरिग्रहोऽतएवगवोद्घादयःप्रयोगाभाष्येसङ्गच्छन्तइति दिक्। अनित्यत्वादिति। अनेनयथासंनिपातपरिभाषाशेषस्थपरिभाषेन्दुशेखरविरोधोनतथातत्रैव तद्विवृत्तिसंग्रहेस्पष्टम्। देवता-

तेत्यादिनुदविदेतिनत्वं संज्ञायांन देवेत्युपलक्षणंभवन्नातादेः क्रियाशब्देवाऽन्विविभाषेतिलत्वं प्राण्यङ्गे नित्यंविषेनैवक्रियाशब्देवाविभाषाग्रहइति लोजलचरेनित्यंसूर्यादौन क्रियाशब्देवा लक्षणहेत्वोरिति शत्रादिविधिर्हन्तीति पलायतइत्यादाविति शब्दप्रयोगे तेनत्वादयोमिथएकस्मिन्विषयेनविकल्पन्ते किन्तुविषयभेदेनेत्यर्थः । एवंवातायनेनित्यमऽवङ्प्राण्यङ्गे न गवाङ्गमित्यलवा। शाच्छोरितीत्वंव्रतविषयेनित्यं संशितोब्राह्मणोन्यत्रवेति बोध्यमित्याहुः । नेदंपरिगणनन्तेन भाष्योक्तान्यसंग्रहइत्याह। अग्नीदिति एतदिति। अग्नीदितिप्लुत इत्यर्थः। घटितमिति। उक्तोदाहरणेनातिप्रसङ्गायओश्रावयाश्रावयोःपरस्येरिति न्यासान्तरेकृतेऽन्यसंग्रहायबहुलमन्यत्रापीतिन्यासान्तरमित्यर्थः । विभाषेतितदग्रिमविभाषापृष्टेतिसूत्रीयेत्यर्थः । ध्वनितमिति। अन्यथाबहुलग्रहणेसत्वओश्रावयाश्रावयाभ्याम-न्यत्रबहुलंप्लुतस्तत्रापि तत एवनादेर्नपरस्यापित्वन्त्यस्यनित्यं-योगविभागेतुनैवं व्यवस्थेति प्रत्याख्यानासङ्गतिरिति भावः । इतिचव्यवस्थितेति तेनणवुलादौनित्यम् । वलादौवाघञपोर्नेति भावः । इन्द्वे चेतिव्यर्थमिति । इतोपिग्रन्थस्वरसात्स्फोटायनग्रहणस्य पूजार्थतैवलभ्यते। अप्रामाणिकमिति यंयंविषयमुपादायस्यस्यव्यवस्थितविभाषात्वमुक्तन्तदितरविषयकस्यतस्यतस्यतत्वमप्रामाणिकमिति भावः । परत्वासम्भवेनेति विभक्त्याव्यवधानादिति भावः । अनुकरणेत्वभिव्यक्तेति न्यायादिति भावः। यत्तदेतेभ्यइत्यादौवतुवदनुकरणस्यप्रकृतिवद्भावेसम्भवोऽस्त्येवेति समासापेक्षेति तेन-

चोत्तरपदाक्षेपः सिद्धान्तेत्वजनुवृत्तिसामर्थ्येननतदाक्षेप इति भावः । इदञ्चनव्यरीत्यामनोनारोहति तथापि भाष्योक्तमित्येतावतासन्तोष्टव्यमिति दिक् । अन्येत्विदम्प्राचामनुरोधेनोक्तं स्वमतेतूत्तरपदेत्यस्याध्याहारस्तत्फलंचत्रिपदद्वन्द्वबहुव्रीह्योर्गविन्द्रदेवदत्तागविन्द्रप्रिय इत्यादावप्रवृत्तिरतएवप्रकृतसूत्र इन्द्रादावितिवक्तव्यमित्युक्तन्तस्यचायं भावस्त्रिपदेऽतिव्याप्तिवारणायाजादाविन्द्रशब्द उत्तरपदइत्यर्थेगवेन्द्रयज्ञेऽव्याप्तिरत इदं वक्तव्यन्तदर्थस्त्विन्द्रस्यादिर्योऽच् तदादावुत्तरपदइति नाव्याप्तिरितीन्द्रशब्देयोऽच् तदादावुत्तरपद इत्यर्थमाश्रित्यतत्प्रत्याख्यानमित्याहुः । प्लुतप्र । वैपरीत्येनाह । प्रगृह्यत्वेति वैयर्थ्यमिति । पूर्वसूत्रेनित्यग्रहणं पठद्भिरुत्तरसूत्रेऽपठनादिदश्चिन्त्यम् । इहभाष्येपठितमित्तिप्रामाणिकमिति वाशयः । अनुवर्तमानेति जानुउरुजतीत्यादौ पूर्वेणसन्धिवारणायेति भावः । तेनजानूइति । नन्वेण्ङिशीनामित्युक्तरीत्यासिद्धमेवेदमिति वाच्यम् उअस्येत्यनयोःपूर्वसम्बन्धेपश्चाज् जानूपदसम्बन्धेप्रकृतिभावस्यैवान्तरङ्गत्वात् । वाग्रहणेति विभाषाग्रहणेत्यर्थः । वाधकेति परत्वादिति भावः । यद्यपि नेतिवाच्येप्रकृत्यैत्युक्त्यापूर्वेषां सर्वेषामिवपरस्यापि ह्रस्वस्याभावः । नान्तःपादेतिपाठेपि बाध्यसामान्यचिन्तयासिद्धोऽन्यथाऽनन्तरसन्धिकार्यस्यैव निवृत्तिःस्यान्नतुसर्वेषां तथापि ऋत्यकइत्यत्रापि बाध्यसामान्यचिन्तावश्यकत्वेनहरीऋच्छत इत्यत्रापवादविप्रतिषेधाद्ह्रस्वःस्यात् तदर्थं नित्यग्रहणमिकोऽसवर्णेइत्यत्रतुनबाध्यसामान्यचिन्तावश्यक-

त्वंतद्विषयेयणएवप्राप्तेरिति बोध्यम्। प्रथमयेति तदन्तेनेत्यर्थः। सर्वत्रेत्यादौ सप्तम्यन्ततयाविपरिणतत्वेनदिवउदित्यत्रापि तथैवोपेक्ष्यमाणत्वेन चेहैवविपरिणामः किमर्थइति चिन्त्यम्। अथवेकःपदान्तस्यप्रकृत्यावस्थानमित्यर्थेसर्वत्रषष्ठ्यैव विपरिणामोऽस्तु प्रकृतसूत्रेति लुटिचेतिसूत्रस्थचकारप्रत्याख्यानपरम् भाष्यन्तुविधेयांतरासम्बन्धचकारविषयकमिति बोध्यम्। एतेनेति। भाष्यविरुद्धकल्पनापेक्षयासामर्थ्यसिद्धार्थानुवादकत्वस्य चकारउचितत्वेनेत्यर्थः। वार्तिकमित्येकवचनेनभाष्यएकवचनमिति सूचितं। अपास्तमिति पदान्तादित्यनुवृत्तिर्बहुक्रच्छकेत्यत्रबहुच्यतिप्रसङ्गभङ्गायावश्यकीति भावः। व्याख्यानादिति। तद्वदस्याभावेमानाभावादित्यर्थः। प्रकरणेति प्रतिज्ञयातात्पर्यबोधनात्। द्वयमिति। तावतएवसत्वादिति भावः। वाक्यस्यटेरितोति पाठः। अनन्त्यस्यापीति। एकवचनन्तु प्रत्यभ्युद्यमानस्य हूयमानस्यैवप्लुतः प्राप्नोतीत्यभिप्रेत्यसूत्रद्वयेन यत्तुभाष्येवाक्येयावन्तिपदानितेषांप्लुतः प्राप्नोतीत्युक्तंतत्वेतदद्वयातिरिक्तविषयकमिति भावः। अचोविशेषणेति तदऽनुपस्थितिस्तुनटेर्विशिष्टस्यप्लुतापत्तेः। निस्वादाविति पाठः। प्रगृह्यस्येतिसूत्रेणेति पाठः। सप्तम्यन्तपाठेवृत्तिकृतेतिशेषः। प्रत्यभिवादेतस्यैवइति प्रत्यभिवादविषयवाक्यावयवस्यैवइत्यर्थः। ननु तत्प्रयोगेकथंनामान्तंवाक्यमत आह। अवयवत्वेति। एवञ्चशर्मान्तशब्देन्तशब्दश्चरमावयववाचीतद्गुणश्च बहुव्रीहिरिति भावः। नन्वेवमन्यतरप्रयोगस्यलाभेपि तस्यतदन्तत्वलाभःकथमत आह। तत्राधीति स्पष्टञ्चेद-

मत्रैवभाष्ये स्वरूपास्वरूपग्रहणकृतविशेषायठ्याचष्टे भोशब्दे-तिप्लुतोवेति पाठः । दूराद्बोधनस्योपेति । तन्मात्रस्येत्यर्थः । नियतस्योपलक्षणं नत्वनियतस्येत्याशयेनाह । आगच्छतुइति कडारसूत्रेति।रेफान्तमनुकृत्यागन्तु नाकारेणनिर्देशोबोध्यः।असत्यपोति। अतएवातोरोरिति सूत्रेसुत्रोता अवत्वमसीत्युदाहृतं भाष्येतवदूरत्वस्याविवक्षायावक्ष्यमाणत्वेन ननु किमर्थंयोगविभागेन विधानं नगुरोरनृतइत्येव सिद्धमिति चेन्न । भोशिवभद्रइत्यादौ गुरोरभावेननपुंसकेकर्तृ हर्तृ इत्यादौ ऋकारसत्वेनभोअराओइत्यादौ अनन्त्याभावेनाद्यांशस्याप्राप्त्यादेरित्यंशस्यापि संनियोगशिष्टन्यायेनाप्रवृतेस्तत्रदूरत्वस्याविवक्षायावक्ष्यमाणत्वेनेहतुतद्विवक्षणेन विभागावश्यकत्वाच्च । हैहेसंबोधनदर्शनेनेति नामग्रहणनिषेधस्थलइति भावः । गुरोरनृतइत्येवेति । उक्तरीत्यातस्यानन्त्याभावेनाप्राप्ते रिदंचिन्त्यम् । अतएव पूर्वेणहूयमानार्थस्य विधानेनाप्राप्त्यावचनमिति कैयटउद्योतकारोपिदूराद्धूतेचेति सूत्रान्तरेणसिद्धे किमर्थमित्यतआहेत्यवतारितवान् हैहेन्तइति बहुव्रीहिस्तत्पुरुषत्वेतुतयोरन्तत्वेसतीत्यर्थः । अत्रेदं बोध्यम् हैहयोर्हूयमानार्थकत्वेहैहयोरिति न्यासेवाक्यावयवयोस्तयोष्टेरच्च ऽ प्लुतइत्यर्थेहेरामेत्यादौ विध्यर्थंस्यात् । तदन्तवाक्येतु पूर्वेणसिद्धएवसः तदादौवाक्येहैहेटिवाक्यटिप्लुतयोः समावेशःपरंदोषः हैहेन्तवाक्यावयवहूयमानार्थपदटेः प्लुतइत्यर्थेरामहइत्यादावनिष्टोनन्त्यपदटिप्लुतः सूत्रस्यफलं स्यात् । आदिभूतयोस्तयोरिष्टःप्लुतोनसिध्येदनन्त्यपदटि अन्त्यहैहेटिप्लुतयोरनिष्टःसमावेशश्च स्यात् । अन्त-

योर्हैहयोःपरमिष्टःप्लुतःपूर्वेणसिध्यतिप्रयोगेहैहयोरिति न्या-
सेत्वारम्भादेवानन्त्यग्रहे सिद्धेऽन्त्यानन्त्ययोः प्लुतार्थङ्क्रियमा-
णात्प्रयोगग्रहणान्नियमार्थत्वंसंपद्यतइति सर्वेष्टसिद्धिः प्रथमे-
पक्षेप्रत्त्यासत्त्याद्वितीयार्थत्वमभिमत आद्यार्थवारणायहैहेन्तइ-
त्येववदेत् । हैहेप्रयोगे इत्युक्तेत्वन्त्यानन्त्यसाधारणेप्रयोगेहू-
यमानार्थवाक्यपदस्यटेःप्लुतइत्यर्थादिष्टेसिद्धे पिसमावेशःस्या-
दिति यथान्यासमेवरमणीयम् । प्रयोगेहैहयोरिति तुसुवचम्
कालाध्वनोरत्यन्तसंयोगइति वत्प्रत्त्यासत्त्यासर्वेष्टसिद्धिरन्त्य-
योरेवेतीदश्चिन्त्यम् । हैहेन्तइत्येवसिद्धेप्रयोगग्रहणेनोभया-
र्थत्वसिद्धेः । अनर्थकयोरपीति । अयंभावः । एकंहैहेग्रह-
णंनामग्रहणनिषेधविषये एहिहइत्यादौ हूयमानार्थकत्वा-
भावादप्राप्ते विध्यर्थम् । अपरंचहेराभेत्यादौ वाक्यादित्वाद-
प्राप्ते विध्यर्थम् । अर्थवत्परिभाषाबाधेन्त्वनमानमतःप्रयोगेति
तस्यानर्थकत्वंचशास्त्रोशब्देस्त्रीशब्दस्येवततोऽर्थबुबोधयिषाविर-
हात् । एतेनद्योतितत्वेनद्योत्याभावादित्यसङ्गतंद्योत्यभेदाभा-
वेपि द्योतकसमुच्चयस्य बहुशोदृष्टत्वादित्यपास्तम् । बुबोधयि-
षाविरहप्रतिपादनेस्योपयोगादनर्थकस्यापि पदत्वंतु निपात-
स्यानर्थकस्येत्यनेनास्त्येवेति बोध्यम् । वाक्यपदन्तुटेरेवविशे-
षणंनानर्थस्तदवयवत्वोपयोगः क्वचित्तुतन्मध्यपतितेति तत्व-
मस्त्येव पदत्वाभावादिति । आभिमुख्यरूपसम्बोधनद्योतकत्वे-
पि तत्वाभावः । नामगोत्रयोरेव तद्वृत्तित्वादतएवतच्च-
रुढमिति प्रागुक्तविरोधोन आहुरिति । उक्तान्यस्वरसबीजानि ।
समावेशंसमर्थयन्नेवकारसमर्थनं खण्डयति । यत्विति यत्तु-

गुरोरनृतइत्यस्यभिन्नपदत्वेपि प्रवृत्तिरिति तन्न । अनुदात्तमित्यनेनसिद्धएकैकग्रहणाङ्गिमर्थमिति भाष्यविरोधात् । गुरोरनृ । अविवक्षितमिति । इदञ्चनभाष्यसम्मतमतएवप्रकृतसूत्रेभाष्येलघोरन्त्यस्यप्लुतप्रसङ्गोदूराद्धूतेन्चेति विशिष्योक्तम् । सूत्रशेषस्थएकैकग्रहणमनुदात्तं प्रश्नान्ताभिपूजितयोरिति विहितप्लुतसमावेशाभावार्थमिति भाष्यस्यत्वेतद्विहितप्लुतमनूद्यानुदात्तत्वरुपगुणमात्रन्तेनविधीयत इत्याशयस्तदेतद्वक्ष्यतिवृत्तौ स्पष्टमिति भोराजन्येति । अयोगविभागाभिप्रायेणविकल्पसाम्याद्विशिष्योक्तिरित्याहुः । एतत्त्रयेति प्रत्यभिवादे दूराद्धूतेहैहेप्रएतत्त्रयेत्यर्थः । इदंकेचित्तुमते पूर्वमतेतुभोराजन्येतित्रित्वं बोध्यम् । वृत्तावितितत्राद्योक्ते प्रत्यभिवादेप्लुतोविहितस्तस्यैवायं स्थानिविशेषउच्यत इत्यन्त्येचानुदात्तमित्यादिनालाघवादनुदात्तत्वादि गुणविधानेनप्लुतः सचदूराद्धूतइत्यादिभिरेवेत्युक्तम् । अन्त्यलघुमतीति । असुब्वतइति वत्साधुवाक्यइति शेषः । चेत्यादीनामिति । आदिःप्रकारेबहुवचनं स्पष्टार्थं नप्रवर्ततइति । स्वरितत्वादित्यादितत्रैवशेखरेक्षोदिष्यते । प्रवृत्तावप्युदात्तानुदात्तप्लुतसमावेशाभावायतदित्यपि बोध्यम् । परस्यचेतीति पाठः । वक्तव्यमिति । अग्नीदित्यस्यस्थानइति भावः । सङ्गच्छतइति । अन्यथाप्रत्याख्यानपक्षेतस्यदुर्वारत्वेन फलभेदापत्त्यासङ्गतिःस्यादिति भावः । ननु गुरोश्चानृतएकैकस्यप्राचामित्येवास्त्वनृतोगुरोश्चादेःप्लुत इत्यर्थादिति चेन्नागुरुसमुच्चायकतापि स्यादिति चकारस्यापत्तेर्नचैवं गुरुग्रहणंव्यर्थमिति वाच्यम् । गुर्वभा-

ववस्पदव्यावृत्याचरितार्थत्वात् सिद्धान्तइवव्याख्यावलम्वने-
तुनकश्चिदोषः। अप्लुतव । अप्लुतस्याविधानेनेति पर्यु दासा-
द्ध्रस्वस्यदीर्घस्यचेत्यर्थः । नन्वान्तरतम्याद्दीर्घएवस्यादितिवाच्य-
म्। दीर्घइत्येववाच्यएवमुक्त्यांतरतमपरिभाषावाधादिदंचाप्लु-
तएवविधीयेतेति पाठानुपलंभमालंव्य नोपस्थितइतीति ।
तद्विधावनुपस्थितइत्युक्तेतुपर्यु दासादवसानेनस्यात् प्लुतइति
भावः । नन्विहप्रकरणेपाठेसर्वस्यापि निषेधःत्रिपाद्यान्तथा-
न्यासेत्वन्यतमस्यस्यात् । यदितुवाक्यस्यटेरित्यनेन सहा-
स्याप्यधिकारस्त्वं क्रियेततदासोमसु३दिति दे३वदत्तेत्यनु-
ब्रूहीतीत्यादावपि प्लुतोनस्यात्तत्तद्विधायकैरपि सम्वन्धादिह-
पाठेतुननिषिध्यत उपस्थितस्यव्यवहितत्वादिति चेन्न । इह-
न्यासेपि वाध्यविशेषचिन्तायावक्तुंशक्यत्वात् । यद्वा त्रिपा-
द्यामेव वाक्यस्यटेरित्यतः प्राक्नोपस्थितेप्लुतइति निषेध्रवि-
धिरस्तुततोवाक्यस्यटेःप्लुतइत्यनुवर्तते । एवञ्चानारभ्यविधि-
मधीतस्यास्यसर्वप्रतिषेधकत्वमिदप्रतिषेधस्यैवेत्याशयात्। वदे-
दिति मन्मतेतु अतिइति अग्निइति इतिप्रयोगद्वयमादेशपक्षे-
निषेधेतु दीर्घघटितएवेति फलभेदात्तथानोक्तम् । नचादेशे-
ऽल्विधित्वेन प्रगृह्यत्वानतिदेशेनसन्धिकार्यप्रवृत्तौ अग्नीतीती-
त्येकमेव स्यादिति वाच्यम् । एवमपि पञ्चमीसमासेनस्था-
निवत्वात् । आदेशस्यवहिरङ्गासिद्धतयाप्रकृतिभावप्रवृत्तेर्नि-
ष्प्रत्यूहत्वादिति भावः । नन्वेवंसिद्धान्तेपीन्द्रे चेकोसव-
र्णत्यक आङोनु प्रगृह्या अचिप्लुताश्चाकवर्मणस्यनोपस्थितेदि-
वउदिति न्यासःकुतोनकृत एवं हिशाकलविषयेपरत्वादेवप्र-

कृति भावःसिद्धइति नित्यंग्रहणंनकर्त्तव्यमित्यपरलाघवमिति चेन्न । तथासतिनिषेधानांवलोयस्त्वेन प्रगृह्यत्वप्रयुक्तप्रकृति-भावस्याप्युपस्थिते निषेधापत्तेः स्पष्टंचेदं तसिलादीत्यत्रशेखरेन-चादेशविधानेप्रगृह्यप्रयुक्तप्रकृतिभावेनादेशनिवृत्तौ भाष्योक्तदूषणानवतारो निषेधस्यतुप्रकृतिभावाप्रतिबध्यत्वेन प्लुतश्रवणं नस्यादिति तदऽवतारइति वाच्यंवक्ष्यमाणरीत्यादेशस्यवहिरङ्गत्वेनासिद्धतयाप्रकृतिभावानित्यत्वात् । प्रकृतिभावेनस्वरूपस-ह्विकारनिवृत्तिरिति तुवक्तुमप्यशक्यंनिपातएकाजितिसूत्रेह-लन्तस्य प्रगृह्यत्वेनैवदोषइति भाष्योक्तिविरोधात् त्वद्रीत्यापुरोस्तीत्यादौ रुत्वाप्रवृत्त्यापत्तौदोषसत्वात् रुत्वस्याज्निमितत्वा-भावेन प्रकृतिभावाप्रतिबध्यत्वेतु पूर्वत्रासिद्धमित्यस्यबाधे-मानाभावादिति बोध्यम् । नचैवमप्यत्वस्याज्निमित्तत्वेनप्र-तिबन्धापत्ती रुत्वस्यासिद्धत्वेनसानेति प्रदीपोद्योतयोरुक्तंतुन-सम्यक् । असिद्धत्वेपिसान्तबुद्ध्याप्रवर्तमानौ संज्ञाप्रकृतिभा-वौरान्तएवप्राप्तौ तत्रचरान्तबुद्ध्याप्रवृत्तंमुत्वंपश्यतौ तत्प्रतिब-ध्नीयातामेव तन्निमित्तरोरदर्शनेपि तत्प्रवृत्तिदर्शनेप्रतिबन्ध-काभादवाग्नी इत्यत्रानुनासिकविधेर्ईमात्रत्वाग्रहेपि प्रगृह्य-त्वप्रवृत्तिग्रहवदिति वाच्यम् । यद्बुद्ध्याप्रकृतिभावप्रवृत्तिः तस्ययो विकारस्तत्प्रतिबन्धएवप्रकृतिभावप्रवृत्तिरित्याशया-त्ऽत्रतुसबुद्ध्याप्रवृत्तीरस्यविकार इति नन्वेवमेहिस्वइरिन्नग-च्छति एहिदेवदत्तएऽत्रेऽयंपाहिशिव ओंनमस्कारोमित्वा-मित्यादौ वहिरङ्गसन्धिकार्यस्य प्रकृतिभावेनवारणं नस्या-दिति चेत्सत्यम् । इष्टापत्तेरनिष्टत्वग्राहकप्रमाणोपलम्भे-

तु बहिरङ्गासिद्धत्वानित्यत्वमेव शरणङ्गौरवस्य फलमुखत्वं- प्रतिपादयन्सिद्धान्तेशङ्कते नचपरीति । अन्तरङ्गत्वादिति । वस्तुतस्तु शास्त्रकार्यातिदेशयोरुभयोरप्यतिदिश्यमानकार्य- स्योपदेशदेशानतिक्रमात्प्रकृतिभावस्यैव परत्वेनप्रवृत्त्यानक- श्चिद्दोषः। एतेनातिदेशप्राप्तकार्यस्यासिद्धत्वात्कथंप्रकृतिभाव- निवर्त्यत्वमित्यपास्तम् । तदेतद्ध्वनयन्वक्ष्यति सादृश्यविधा- नस्यैवेति प्लुतेकृतेपीति तस्यासिद्धत्वात्पूर्वंप्रगृह्यत्वेपीत्यादिः दीर्घत्ववृद्धिवदिति। अनुनासिकप्रतिबन्धायपुनःसंज्ञाप्रवृत्तयेत- द्वृद्धेरावश्यकत्वादिति भावः । प्रगृह्यत्वमिति प्रकृतिभाव- दृष्टेति भावः । तत्वमिति । प्रगृह्यत्वमित्यर्थः । चेतव्यमिति प्रश्नइदमित्येकवाक्यस्थमेव युक्तमतःसामान्यतःपृच्छति क- र्त्तव्यमिति । चिनुइतिलोडन्तम् । हीत्यव्ययम् । विभाषेति । अ- नन्त्यस्यापि प्रश्नेत्यस्यासिद्धत्वादनेनैव न्याप्यइति भावः । टाविति नत्वव्ययमिति भावः । नवेतीति द्वयोर्विभाषयोर्मध्ये- प्राप्ताप्राप्तविभाषयेत्यपि बोध्यम् । योगपरत्वेसूत्रपरत्वेवा । इयमित्यसङ्गतमत आह । उद्देश्येति उक्तंप्राक् । ईंचाक्र । वृहतितुनार्थं इत्यस्यचाक्रवर्मणस्येत्येतत्सम्बन्धेन । नार्थः- नसकलप्रयोजनसिद्धिरित्यर्थः । अयंभावः । ईइतिपृथक्प- दंकार्यम् । उपस्थितइति वर्त्ततेपूर्वेणसिद्धेविकल्पार्थमिदम् । ततश्चाक्रवर्मणस्येति अयमेवन्यासूत्राशय एवञ्चसूत्रभाष्ययो- र्नविरोधोभाष्याविरोधेनसूत्रस्येव सूत्राविरोधेनभाष्यव्याख्या- याउचितत्वाच्च । एतेनभाष्ये ईंग्रहणसत्वेवशेयमित्यसिद्धि- वत् । चिनुहीतीत्यादौ नित्याप्लुतवद्भावासिद्धिर्नोक्तानापि

पूर्वविप्रतिषेधारम्भगौरवमित्यपास्तम् । कैयटस्यप्रमादइत्येव प्रमादिकमित्युक्तम् । निपातए । पर्युदासादर्थवद्गृह्य तात आह । प्रत्ययेति नन्वेवंकापि वहुब्रोहिर्नस्यादत आह । व्याहरतीति । आआत् । अमिति समाससंज्ञासमकालं दीर्घेततोनपुंसकह्रस्वः । उपदेतुलुकःप्राक् दीर्घप्राप्तिरेवनेत्यन्तरङ्गत्वाच्छ्रस्वेततोदीर्घइति नादसोसेरिति सूत्रोयशेखरविरोधः । यदिसेश-ऽढेवक्ष्यमाणरीत्यापद*त्वाभावान्नप्रकृतिभावप्रसक्तिस्सत्यपि †तत्वेइत्युच्यते तदाअंइतःएतआओःउअस्तिवस्तीत्यादौ तत्प्रसक्तिर्बोध्या आगतःउओरानन्दोवानन्दइत्यादौ तत्प्रसक्तेश्च । एतेन नपुंसकह्रस्वेत्समतेऽल्विधित्वान्निपातत्वारोहः कथमिति समाहितम् । स्वाश्रयेति ननुस्वाश्रयधर्मप्रयुक्तकार्याभावेपिपरादिवद्भावेनाङ्भिन्नत्वातिदेशेतत्वन्दुर्वारम् । अशास्त्रीयत्वात्तत्वानतिदेशइत्योत्सूत्रीयोद्योतोक्तन्नयुक्तम् । अर्थवत्सूत्रेशेषेभाष्येकाण्डइत्यादौ पूर्वान्तत्वेनप्रत्ययान्तभिन्नत्वातिदेशस्योक्तत्वात् । प्रगृह्यत्वंनेति तत्वेत्वमित्यत्रामिपूर्वइति पूर्वरूपंनस्यादिति भावः । स्पष्टार्थमिति । अन्यथादीर्घत्वादिनापि सादृश्यंगृह्येतेति भावः । सिद्धिरिति । इकःपरोयोहल्इत्येव सिद्धेऽन्तग्रहणादव्यवहिताव्यवहितसाधरणंसामीप्यमिति तुवक्तुमशक्यं यियक्षतीत्यादौ कित्वेसंप्रसारणापत्तेरनल्विधावित्यादौ तुसामर्थ्यान्नजातिग्रहणमित्यर्थइति अन्यथाजातिग्रहणेपि जातेरेकैकव्यक्तिव्यंग्यतयाऽसङ्गतिरेव प्रवृत्तिनिमित्ततयाजातिग्रहणस्यसर्वत्रसत्वेन तस्यावक्त

---

*प्लुतप्रगृह्याइत्यत्रापि पदान्तादित्यनुक्तं प्रथमयाविपरिणतंचेतिभावः। †प्रगृह्यत्वे

व्यत्वात् । स्मृतार्थेति । ओकारप्रतिपाद्यार्थेत्यर्थः । अव्ययसंज्ञादाविति । आदिनानिपाताएकाजिति प्रगृह्यत्वन्तेन ईअभवदित्यादौ गृह्यत्वमतएवौदित्यत्रैवच्व्यन्तप्रतिषेधउक्तः प्रत्याख्यातश्च न्यायेन। अनित्यत्वादिति नन्वव्ययसंज्ञायाःकथंपदकार्यत्वंयेनानित्यत्वमवलम्ब्यतइति चेच्छृणुपदकार्यविषयकोऽयंन्यायइत्यस्य यस्यशब्दस्यवस्तुतः पदत्वविशिष्टस्यैवयत्कार्यप्रयोजकत्वं प्राप्नोतितत्रकार्येतस्यगौणार्थकस्यनग्रहणमिति न्यायार्थइत्यर्थः । अस्तिचच्व्यन्तस्यपदत्ववतएवाव्ययत्वप्रयोजकत्वम् । प्रत्ययोतरपदयोरित्यादौ तुत्वदीयादौपदत्वाविशिष्टस्यापियुष्मदादेःप्रयोजकत्वदर्शनात्त्वद्भवतीत्यादिसिद्धिरिति । परिभाषेन्दुशेखरविवृतिसंग्रहेविस्तरः । अत्रैतत्परिभाषेत्यस्य एतन्मूलभूतार्थवत्परिभाषेत्यर्थः तदाह । अतएवानर्थकेति। सासंज्ञा। निपातेति। प्रगृह्यसंज्ञा। सम्बुद्धौ शा। ङपो इतोति ननुसंबुद्धित्वस्य हल्त्वेनस्थानितावदवृत्तिकत्वात्सर्वत्रैवतत्परत्वंदुर्लभमिति चेन्न । नियमस्यविधिमुखेन प्रवृत्तिरिति पक्षेप्रत्ययलक्षणेनसौलभ्यात् । सौशाकल्येतिसिद्धेसंबुद्धिग्रहणंप्रगृह्यत्वेनलुमतेत्यस्याप्रवृत्तिज्ञापनार्थं तेनमिथोइतीत्यत्रातिव्याप्तिवारणेन संबुद्धिग्रहणंचरितार्थं फलञ्चत्रपोइति । सूत्रकृन्मतं न तु निमित्तसप्तमीत्याहुः । ननूपस्थितइत्येव कुतोनोक्तमिति चेन्न । उत्तरत्रइताबित्येवयथासम्बध्येतवेदे ऊँ यथास्यादिति । रत्नाकरस्त्ववैदिकइति शेषः । अनार्षइत्यनुवृत्तेर्वृ तावुक्तत्वादिति व्याख्यत् । तत्तुचिन्त्यमेव । उकारश्चेतिकरणेनयुक्तोरक्तो पृक्तोद्राघीति प्रातिशाख्यविरो-

धादवस्तुतोवेदे आपाद्यमानरूपाभावेनानार्षइति व्यर्थमेवेति तु न छान्दसेति परकलौकिकौदन्तेदोषात् । अतएवेति सामानाधिकरण्यायतद्धितःसार्थकः।अत्रओःशाकल्यस्येति सुवचन्तुन अउओइत्यत्रापि उवर्णस्थानिकत्वेनदोषात्। अवादीति आदिपदंचिन्त्यार्थकम् । इदमिति । सूत्रमित्यर्थः । उञःनिपातएवेति नतुप्रत्याहारःतथासतिउजित्येवब्रूयात् । नापिकृतसंप्रसारणस्यवेञोलाक्षणिकत्वादिति भावः। स्थानिवद्भावेनेति।अग्रहोदित्यादाविट्त्वस्येवेति भावः। मानाभावादिति यद्यपिसामानाधिकरण्येनान्वयस्यपूर्वंक्लृप्तत्वेनोञइति श्रुतत्वादादेशेनैवसम्बध्यतइति न्याप्यंकैयटोक्तेश्च उञइत्येतदावृत्त्यभावप्रयुक्तलाघवानुरोधेन प्रगृह्यसंज्ञकश्चेति भाष्योक्तिस्वारस्येनचसम्भवतिसामानाधिकरण्येवैयधिकरण्यस्यान्याय्यत्वेनास्यादेशविशेषणत्वमेवन्याय्यम्।तथापि वक्ष्यमाणभाष्याऽनुरोधेनोद्देश्यत्वस्यविशेषणत्वमेवयुक्तम्। लक्ष्यविसम्वादाच्चेति स्फुटीभविष्यति।नतुउइतीति। न च निरनुबन्धकोकारमादायतत्सिद्धिरु इतीत्यस्मात्सानुबन्धकप्रतीतेरपीष्टत्वादिति स्पष्टमुद्योते न च ऊँ भावाभावपक्षेशाकल्यह्रस्वेन उइति वितीतिसिद्ध्यतीति वाच्यं योगविभागाभावेऊं विधौशाकल्यपदस्ययथाश्रुतत्वेनशाकल्यान्यमतेच शाकल्यह्रस्वस्यनाप्राप्त्याऊँ भावस्यतक्रकौण्डिन्येतिन्यायेनभोभगोइति सूत्रभाष्योक्तरीत्यातत्रतत्कृत उञ्त्वाभावेनसार्थक्याभावेनन्यायाप्रवृत्तौ तुसर्वथानिरवकाशत्वेनवाशाकल्यह्रस्वबाधकत्वात्। तदभावपक्षेतदप्राप्तेश्च ननुयोगविभागेकृतऊँ भावपक्षेशाकल्यह्रस्वेनऊँ इतीति

चतुर्थंरूपं सम्भवतिनवेति चेच्छृणु परत्वान्तरङ्गत्वाभ्यांऊँ भावात्प्राक् शाकल्येक्षतिरेवन ऊँ भावेप्रतिपदोक्तत्वात्प्रवृत्ते-तुनतत्प्राप्तिंहरीएतावित्यत्रेवप्रकृतिभावेनवाधादिति । वैय-र्थ्यापत्तिरिति संहिताऽविवक्षयातुनसार्थक्यमितावितिसप्तमी-निर्देशसत्वेनतद्विरहउपश्लेषएवनेतिपूर्वमुक्तत्वात् । विधिवै-यर्थ्यन्तुनोक्तम् प्रतिपदोक्तत्वादलङ्कृतेशाकल्येनानुनासिकेह्रस्वे साकल्यात् । विकल्पमात्रेति शाकल्यपदइत्यर्थः । विधानेति प्राचीनमतेनेदम् । तत्रहिशाकल्यह्रस्वेप्यस्यसार्थकयेन तत्रत-ऋन्यायेनायमूंह्रस्वबाधकइति नालङ्कृतेनानुनासिकह्रस्व इति पूर्वंवन्नसार्थक्यं स्वमतेतुपूर्ववद्दीर्घविधानेत्यर्थः। इतिशेखरविवृ-तिसंग्रहेऽच्सन्धिः स्तोश्चुनेति लुप्ते ति। आद्ये सुपोधात्विति अन्त्येहल्ङ्याबितीत्यन्ये रुत्वेविसर्गसत्वेचानुपपत्यऽभावेपि ज-श्त्वाभावायच्छान्दसत्वातिदेशस्यावश्यकत्वेन ततएवलुक्कल्प-नेलाघवम् । एकपदत्वेतुचार्थेतत्प्रवृत्तिरपि यथासंख्यमन्वया-दगमकसाध्यैव कृत्तद्धितसुपोधातुच्छन्दोवत्सूत्रेति बहूनामऽनु सन्धानेगौरवमित्यभिप्रेत्याऽऽहभिन्नइति युवोरनाकावितिसू-त्रेभाष्यइतरेतरयोगेसौत्रोलोपइति ग्रन्थस्तुकयोर्युवोरिति सू-त्रस्थभाष्याऽनुरोधादिति नतद्विरोधोऽत्रपक्षेप्रत्येकं स्वरितत्वं प्रतिज्ञयंष्टुनेत्यत्रानुवृतये ॥ तदऽपिस्वरितत्वस्याञ्झलसाधा-रणदोषरूपत्वेऽज्निष्ठस्वररूपत्वेत्वेकपदत्वमेव न्याय्यमित्या-हुः । योगइति वदतोमूलकृतोमतेसंहिताधिकारसत्वेन नि-मित्तकार्यिणोःसंहिताविरहादेवचित्तादौ नदोषः तत्प्रत्याख्या-नंतुस्यादेवात आह । संयोगइति नन्वेवमपितस्मिन्नितिसू-

त्रैभाष्येनिर्दिष्टइत्यस्यसमिधावित्यत्रयण्नेतिप्रयोजनमुक्तम् ।
तत्रमनोरमायां चाच्चियणित्युक्तेर्व्यवहितेपि प्राप्नोतीत्युक्तम् ।
तदुभयमप्यसङ्गतं संहिताविरहादेवयणोऽप्राप्ते रिति चेन्न ।
तत्सन्निकृष्टवर्णसन्निकर्षस्यापि संहितासंज्ञाप्रयोजकत्वात् ।
साक्षात्सन्निकर्षग्रहणेमानाभावात् । यथानचवाहेतिसूत्रेयुक्त-
ग्रहणम् । अतएवैकपदेसंहितानित्येति यथाश्रुतंसङ्गच्छते
ऽन्यथाययोरस्तितयोरस्त्येवययोर्नास्तितयोर्नास्त्येवेति व्याख्ये-
यं स्यात् । पदस्येति । पदान्तस्येतिणत्वनिषेधकसूत्राद्यरोऽनु-
नासिकइत्यर्थमधिकृतमपीति भावः । अतएवैकादिश्चैकस्ये-
ति सूत्रेऽडट्कर्त्तव्यइत्याशंक्यपदान्तस्येति विधीयमानमनु-
नासिकत्वंनस्यादित्युक्तम् । पदान्तस्येत्युक्तिस्वरसभङ्गप्रस-
ङ्गान्नास्यनपदान्ताट्टोरित्यतोऽनुवृत्तिरित्यभिप्रायकत्वं विभक्ति-
विपरिणामापत्तेश्च । अन्तपदानुक्तिस्तुतस्यतत्रानावश्यकत्वसू-
चनायष्टुनेत्यत्रतुनपदान्तादितिज्ञापकादसम्बन्धः । एतेन-
पदाधिकारस्यापदान्तस्यमूर्द्धन्य इत्येतदवधिकत्वाच्चिन्त्यमे-
तदित्यपास्तम् । यथासंख्यमिति शेषइति । स्थानेऽन्तरतमपरि-
भाषयासिद्धिरित्यपि वृहच्छब्दरत्नोक्तमनुसंधेयम् । लघुशब्दर-
त्नआन्तरतम्येन लघुनोपायेनसिद्धेस्त्वादिपदैरनादिसिद्धतये-
त्यादिक्रमेणैवोपस्थितिरित्येवकृतआदृतमिति चेत्स्पष्टार्थम् ।
प्रश्नेचेति । ब्राह्मणाभ्यांकृतंदेहीतिवत्तन्त्वमन्वप्रश्नशब्देप्रश्ने-
चेतीत्यर्थः । स्पष्टार्थमिति । पदान्ताट्टे त्यत्रवक्ष्यमाणरीत्यातुन-
सार्थक्यंत्रैपादिकत्वेन समर्थपरिभाषाया अप्रवृत्तेः । पदत्वेन-
हेतुत्वेप्युद्देश्यताविरहाच्च । टोःकिमिति । परान् अस्य-

तीतिपराष्टीकतइत्यादौ तुनदोषः । ष्टुनेत्यनुवर्त्यटवर्गान्तात्प-दादित्यर्थः । एवं षोप्यऽनुवृत्तिः स्यादिति चेत्तत्राह । षकार-स्यापिपदान्तेइति । षत्वस्येति । इदमुपलक्षणंविसर्गसत्वयो-रपि । एवञ्चत्रयाणामसिद्धत्वेरुत्वस्यत्वपवादत्वात्सिद्धत्वेना-झल्त्वाजश्त्वाभावइत्युक्तेश्चाभावइति भावः । एतेनषस्या-सिद्धत्वेपि सकारबुद्ध्यातत्प्रवृत्तिर्दुर्वारेत्यतोऽपवादत्वेनबाधा-त्तदभावइति वक्तव्यएवमुक्तिश्चिन्त्येत्यपास्तम् । वेञ्चोति । इदंवार्तिकप्रत्युदाहरणं सूत्रस्यतुशङ्कुध्मःब्रध्नइत्यादि बोध्यम् । वलयोरपिप्रवृत्तेरिति । दध्याँस्तिष्ठतोत्यादौ यस्यानुनासिकोय-कारस्तुन सन्निपातपरिभाषाविरोधात् । अतोनन्यूनता यद्वा-यत्त्ववश्चवंवंचलश्चवलौतयोरित्यर्थः । मूलरीत्यात्वैयं मूल-न्यूनतापरिहृतिः । स्वमतेहलामणामनभिधानात् । रेफेऽनु-नेति । यद्यपि भाष्येद्वित्वमप्युक्तं तथापि प्रकृतेऽनुपयोगा-त्यागः परसवर्णस्तुसन्धेरैक्यादक्तः । मतेनेदमिति । प्रकृति-पाठेपिन्नत्वीकरणान्निपातनमिति तुनयुक्तम् । त्यदादिष्वपि तथात्वापत्तौ तत्कुलमित्यादौचर्त्वानापत्तेः । तस्मात्नाग्रहोभा-वानुष्ठानेगणेपाठेचेति थस्यासिद्धत्वेति । एवञ्चपूर्वमेव चर्त्वस्य-सकारेप्रवृत्तत्वात् । लक्ष्येलक्षणस्येति पुनर्नचर्त्वमिति भावः । थस्यापवादत्वादित्यपि बोध्यम् । एतेन सकारबुद्ध्यास्यादिति नशंक्यम् । व्यर्थमिति । अयंभावः । अस्यासिद्धत्वात्सलोपे-दकारस्यतकारेणोत्थानं साध्यन्तच्चान्तरेणयत्नं सिद्ध्यतीति । सजातीयानेकव्यञ्जनोच्चारणेविशेषोनेत्यवलंबनेतु यथाश्रुतमे-वयुक्तम् । उदस्थादित्यत्रतुनसार्थक्यमित्याह । उदःस्थेति ।

तङ्स्यइति । इदश्चविकरणान्नियमोवलीयानितिनयेविहितवि-
शेषणंलावस्थायांचस्यतासीतिनयेत्वादौस्यः।यथासंख्यमनु। सं-
ख्याशब्दस्यज्ञानार्थतेति। संख्याशब्देस्वार्थेतद्धितइति भावः।
तामनतीति पाठः। तदनतीति वा। तमितिपाठेतत्प्रकारःक्र-
मोग्राह्यः। ननु प्रसिद्धसंख्याग्रहणेपि नदोषः तत्संख्यापूरकस्य
तत्संख्यापूरकेणान्वये तदनतिक्रमइत्येव वक्तुंशक्यत्वादिति
चेन्न । प्रथमत्वस्यप्रसिद्धसंख्यारूपत्वाभावात्। सम्बन्धोये-
नेति। सम्बन्धइत्यस्यानन्तरंयथाक्रममित्यर्थइति शेषः। शब्दतः
सूत्रान्तरेति। शब्दतःसूत्रान्तरस्थमर्थतोत्रोपस्थितमित्यर्थः। न-
नूक्तलौकिकप्रमाणस्यार्थसाम्येपि प्रवृत्तिरस्तु । अतःफला-
न्तरमाह। आद्यन्ताविति। ङमोह्रस्वात्। पञ्चम्यातदन्तेन।
तत्र। उक्तवाक्ये। एतेनविभक्त्यर्थान्वयायतदन्तेङम्पदश-
क्यापदार्थैकदेशत्वात्। ङमिह्रस्वान्वयोनस्यादित्यपास्तम्।
लाघवार्थइति। प्रकृतोत्तरसूत्रयोरावश्यकविभक्तिद्वयस्ययुग-
पदुच्चारयितुमशक्यत्वेनान्यतरत्रतद्व्यत्ययस्यावश्यकत्वइहैवत-
त्कल्पनं लाघवोद्देशेनेति भावः। ननु सप्तमीनिर्देशइहाऽची-
त्यस्याच इत्यर्थकल्पनमेकमुतरत्रचाच इत्यर्थकत्वकल्पनमपर-
मिति ज्ञानगौरवेणार्द्धमात्रागौरवस्यनिमातव्यत्वात् प्रकृता-
नुगुणप्रत्ययोच्चारणेकार्येसप्तम्युच्चारणसामर्थ्यात् । यथाश्रु-
तैवङमइत्यस्यानिश्चितविभक्त्यन्तस्य षष्ठ्यन्ततांनिर्णाययेदत-
आह। ङमउत्तरेति। अतोमात्रालाघवमेवाश्रितम्। टाङसी-
ति सूत्रस्थभाष्येण मात्रालाघवस्यैवाभ्यर्हितत्वबोधनादिति
भावः। अन्येतु पदविषयकप्रश्नेहेतुमाहेत्यवतारयन्तोग्रिमग्र-

न्थान्वयमिच्छन्ति ॥ मण्डूकेति ॥ दशसूत्र्यामसम्बन्धादिति भावः। आवृत्त्येति । एतत्फलन्त्वश्वस्यपुच्छमश्वपुच्छंनअश्वपुच्छमनश्वपुच्छमित्यत्रङमुडभावः । अजादेरश्वस्यपदत्वेंपिङमन्तस्यपदत्वाभावाच्चिन्त्यम् । अनुवृत्तपदस्येत्यस्याचीत्यनेन विशेषणत्वेपोति प्रकृतसूत्रोक्तोद्योतोयस्यैव सम्यक्त्वात् । एतदर्थमेवेति । पूर्वोक्तरात्यालाघवाभावेनात्रव्यत्ययकल्पनमेतदर्थमेवस्वरूपसत्सप्तम्यास्तत्प्रवृत्तौनिमितत्वादिति भावः । नन्वेवं व्यत्ययप्रयुक्तं गौरवंतवाप्यविशिष्टं मण्डूकानुवृत्तिश्चाधिकेति मूलोक्तमेवास्त्वितिचेत्तत्राह । ङमन्तेति । एतदसाधारणफलन्तुपरमाद्तिरिति । अटते क्विप् अट्परमेणसमासेपरमाट् ततोऽशब्देनषष्ठीसमासेपरमाडः तत आचारक्विप् ततःक्विच् तितुत्रेतिनेट् अतोलोपोऽत्रान्तर्वर्तिसुपापदत्वात् । नपदान्तादितिष्टुत्वनिषेधः । पदान्तत्वनिमित्तकत्वेपि नपदान्तादिति निषेधउत्तरपदस्यकार्यित्वाभावेनेष्टसिद्धिः । नेत्यादाविति । आदिनाअतिबन्धने क्विप् अन् अन्तःअःषष्ठीसमासेसंयोगान्तलोपेअनः तत आचारक्विप्लिट् आमअनाश्चकारेति अत्रहिङमन्तस्यपदत्वेप्यजादेःपदत्वाभावात्ङमुण्नयुक्तः तत्रैवेति । इदमुपलक्षम् । अपदादिविधावितिपर्युदासेनपदान्तत्वनिमितकेविधावेवतत्प्रवृतेरित्यस्य तदसाधारणफलन्तुगणयतेर्विच् गण् हिनस्तेःक्विप्हिन् गंणणश्चःहिन्नश्वइति समासेङमुट्प्रवृत्तिः । अतएव तत्रनञ्घटितंवचनंनियमार्थमुक्त्वा नपदान्तविधावितिभाष्यउक्तम् । अतएवसावपि पदमित्यनेन नफलभेदः । अन्यथावचनारम्भेगणश्चेनप्राप्नोति ङमुट्प्रत्या-

ख्यानेतुसस्यादेव । अतएवतस्मान्नुडचीति सूत्रेभाष्येनुकिङ्मुडापादितः । अन्यथातदसङ्गतिः स्पष्टैव । यत्तुनलुमतेतिसूत्रउद्योतउक्तंपदान्तस्थानिकेविधावित्यर्थइति तच्चिन्त्यम् । परमनुधावित्याद्यसिद्धापत्तेरितिकेचित् । बुधइति समुदायस्यापि पदान्तत्वेनतस्यस्थानेभुधविधानमिति नदोषइत्याशयकमित्यन्ये । एकदेशिनइति । उक्तभाष्यविरोधात् । नलुमतेति सूत्रस्थ*लोपादिविधौप्लुत्यन्तइति वार्तिकस्थभाष्यविरोधाच्चेति भावः । स्पष्टञ्चेदं प्रकृतसूत्रेनलुमतेति सूत्रेचोद्योते । अत्रेदश्चिन्त्यतइति वार्तिकोक्ते ऽप्लुते ऽत्यन्तादपरत्ववार्तिकाप्रवृत्तौ सुकरिणौसुसर्पिषावित्यादौणत्वषत्वयोः प्रत्याख्यानेन्यायप्राप्तयोःकथंसिद्धि रारम्भइति प्लुत्यन्तइति वार्तिकदूषकभा†ष्यं दूषणान्तरोपलक्षणमिति तुयुक्तमुत्पश्यामः । सौत्र‡इति । संहिताया अविवक्षयान्तु इकोयणित्यत्रहशिचेत्युत्वमपिनस्यात् । पदभेदेनविवक्षाविवक्षइति तुनयुक्तम् । संहितयासूत्रकृदपाठीदिति । सर्वसम्मतत्वात् । यदिसूत्रकृताङ्सुट्कृतःस्यात् तदापदकारेणानुपूर्वीसूत्रमध्येनमन्नास्यादित्याहुः । अतएवेको गुणेति सूत्रेउद्योतेउक्तम् । एकयोगत्वञ्च संहितापाठादेवेति । यद्वायदापदेऽव्यवाय इति सप्तमीसमासअतद्धित इत्यस्यख्यानायाश्रीयते तदावापेनेत्यादेर्मध्यमपदत्वानाक्रान्तस्यपदत्वमेष्टव्यन्तच्चान्यथानसिद्ध्यतीत्यर्थः । कार्यित्वेतिवक्त-

---

* उत्तरपदादीति कर्णोवर्णलक्षणादित्यत्रदोषवारणायैतदुक्तंभाष्ये । † यद्येवं राजकुमार्यावित्यादौ शाकलंप्रसज्येतेतिभाष्यम् । ‡ सौत्रइत्यारभ्यपाठादेवेत्यन्तपाठोऽत्रानुनेत्यत ऽप्रागवीक्ष्यः ।

ऽयम् । कृद्ग्रहणपरिभाषाया अनित्यत्वात्तल्लाभः । पदपदंपद-त्वयोग्यपरमितितुनयुक्तम् । बहुषुलक्षणापत्तेः । इदञ्चन्या-यसिद्धम् । पदादिविधेरुत्तरपदसम्बन्धित्वेन तद्भिन्नस्याप्यु-त्तरपदसम्बन्धिनोग्रहणात् । वार्तिकार्थस्तु अपदादिविधावि-तिविषयसप्तमी । विषयतात्वकारकइति वज्जनकतारूपा पदा-दिविधिभिन्नजनकोत्तरपदत्वेप्रतिषेधइति । यदितुस्वातं त्र्य-मऽवलंऽयउजित्त्वपदे इत्यस्य प्रयोजनं संमृग्यते । तदापदाधिका-रस्यऽयधिकरणान्वयज्ञापनमेवान्तग्रहणस्यैवेति गृहाण । स्प-ष्टञ्चेदमुञिचपद इति सूत्रोद्योतेऽत्रानुना अत्रेति । सर्व-नाम्नाप्रकरणपरामर्शोमानमाह । अतएवेति । उक्तमिति । रुत्वपक्षेत्वानुनासिकाद्यापत्तिर्नोक्तेत्यपि बोध्यम् । रुविधावि-त्यर्थेतुतदऽसङ्गतिः स्यादिति भावः । अत्रपक्षेरुप्रकरणेव-क्ष्यमाणार्थकमिदमधिक्रियतइतीत्यर्थोबोध्यः । रोःपूर्वस्येत्यत्र-रोरितीत्यर्थः । पूर्वत्वञ्चाऽयवधानगर्भंऽयाख्यानात् । तेनच-क्रिंस्त्रायस्वेत्यत्रचकाराकारस्यन एवं परत्रपरमपि । इत्यपीति । इत्यत्रापीत्यर्थः । स्पष्टञ्चेदंसर्वंसमःसुटीत्यत्रप्रदीपोद्योतयोः ननु तत्सूत्रोदाहरणस्यभाष्येदत्तत्वेन तत्रतत्प्रवृत्ताविष्टापत्तिरत आह । तत्सूत्रस्थेति । ननुअधिकारपक्षेतत्तत्सूत्रैकवाक्यत-यासमोन्त्यस्यालोरुस्स्यात्पूर्वस्य तुवानुनासिकइत्याद्यर्थात् रोः पूर्वस्येत्यसङ्गतंतस्यविधेयत्वात्तत्रैवावधित्वेनोपादानासम्भवाद ऽत आह । पूर्वस्येत्यस्यचेति । लोपपक्षेऽनुनासिकसिद्ध्यर्थमा ङ्क्त्यवतरणन्तुनयुक्तम् । अभावस्यापि बुद्धिकृतंपौर्वापर्यंवर्णव-दिति शेखरविरोधात् । अयमागमेति । प्रत्ययऽयावृत्तय आ-

गमत्वस्यावयवत्वघटितत्वेऽपि ध्वनितञ्चेदं वृद्धिसंज्ञासूत्रउद्यो
तइतरानुपमर्देनजायमानत्वादस्य तत्वेनव्यवहारोवयवत्वेत्व-
ऽभिमतेपूर्वस्येत्यनुवर्त्यपूर्वस्यावयवः परइत्येवव्याख्यत् नप-
श्चम्यातत्फलन्तु अनुस्वारस्यद्वित्वम् । अन्यथायदागमेतिन्याये-
नविशिष्टेऽच्त्वादचः परत्वाभावेन तन्नस्यात् । यत्तत्वाग-
मस्यापि द्वित्वंदृश्यतेऽनित्यत्वन्तत्तन्यायस्य प्रकृतेतु न्याय-
सिद्धत्वादऽस्यार्थस्यैवमेवोक्तम् । एवमैजागमेपि बोध्यमित्या
हुः । किञ्चैचोरवयवत्वेऽभिमतेनय्वाभ्यांपदान्ताभ्यान्तयोश्चै-
च्डितिन्यासेनङमुटमिवचैच्टंविदध्यात् । प्रकृतेचानुस्वार-
कम् । क्षिप्तस्यापोति । अवसानस्यनसम्बन्धइतोति । विस-
र्गेणानुमितस्यप्रत्यय इत्यादिरूपादव्याख्यानादकारेण सम्ब-
न्धोनेत्यर्थः । सचस्वप्रयोज्यविसर्गस्थानिकत्वरूपः । खरस्तु-
नाक्षेपःफलाभावात् । अतएवखरऽसम्बन्धइति नोक्तम् ।
अवसानेन सत्वमित्येवतुनोक्तं सर्वत्राक्षेपं वदताइहक्लेशः
किमर्थंसोढव्यइत्युपहसितुं किञ्चैङ्ह्रस्वादुरदित्यादौशाब्दे-
भानमऽपेक्ष्यमिहतुनेति आक्षेपेनदोषः । अतएवप्रकृतसू-
त्रेभाष्येसत्वएवकर्त्तव्येविसर्गविधानान्नावसानखरोरुभयोरवि-
सर्गोऽवसानएवकुतोनेति चेत्शर्परइति ज्ञापकादिति गृहा-
णेत्युक्तं ततो हलोत्यनुवर्त्ततइति पक्षान्तरमुक्तम् । ततःख-
रीत्यनुवर्ततइति चपक्षान्तरमुक्तम् । एषांपक्षाणांफलभेद-
भङ्गायावसानेविसर्गंसंपाद्यपश्चादजादिपदसम्बन्धेऽकृतव्यूहप-
रिभाषामनङ्गीकुर्वताऽनभिधानमेवाश्रयणीयम् । तदेतन्म-
नसिकृत्वोक्तं शब्दरत्नेसत्यभिधानेहरिः अयमिति सवि-

तुप्रत्ययसंज्ञानिमित्तंपरत्वमिति तच्चिंत्यंराजपुरुषइत्यादौ प्रत्ययत्वाभावेपि पुरुषशब्दस्यपरत्वदर्शनात् सन्नियोगेतिन्यायानित्यत्वेनइनमादीनांप्रवर्ततएवसंज्ञेतिचतदपास्तंनित्यंचतज्ञाप्याशयस्तुविकारागमेषुफलाभावान्नप्रत्ययत्वमित्येव । आद्युदात्तत्वंचपरत्वसंनियोगशिष्टम् । अतएवपरश्चेत्यस्याग्रआद्युदातश्चेति सूचितंश्चाचनिकरूत्वाऽऽगमानुदात्तत्वमित्यादिकैयटस्पष्टम् । यत्तचइनमादौ फलमस्तिभवत्येवतत्रप्रत्ययत्वमित्यादिनादिगर्थस्तुप्रदीपतोवगंतव्यइत्यलंबहुनेतिव्याचक्षतेतराम् । परश्चेति । अपादानत्वासंभवेति । गुपादिभ्यः सनादिर्भवतीत्यर्थाभावेनतज्जन्यविभागानाश्रयत्वादिति भावः । षष्ठ्यर्थआनंतर्यमितिवौद्धैकदेशाधारकस्थित्याश्रयत्वरूपषष्ठ्यर्थसंबंधनिरूपकाध्याहृतानंतरादिपदबोध्यानन्तर्यमित्यर्थः । अव्यवहिताएवेति । गापोष्टगित्यत्रानन्तर्यस्यषष्ठ्यर्थकत्वेसिद्धेक्केशेनार्थान्तरकरणंपाठकस्यमुधैवेतिभाति । षष्ठ्यंशेति । अत्रचसुपिचेत्यादिनिर्देशास्तात्पर्यग्राहकाइति भाष्टव्याख्यानंतथाच प्रथमांस्वीकृत्यप्रत्ययैःसामानाधिकरण्यमितिभावः । भवत्येवनियमेति । अयंभावः । विधिर्हिद्विविधः नित्योवैकल्पिकश्च तत्र नित्यविधेरजुपश्लिष्टस्येकोयण् तद्घटितःसाधुःसप्रयोक्तव्यः तदघटितोनसाधुसनप्रयोक्तव्यइत्यादिरीत्यास्वविधेयाघटितासाधुत्वबोधनपर्यन्तमपि व्यापारःस्वरतीत्यादिविकल्पविधेश्च साधुत्वबोधनपर्यन्तमेवेत्येवंस्थितेविध्यन्तरवद्वर्तमानत्वविवक्षायां तदघटितस्यसाधुत्वंन्यायसिद्धन्तदविवक्षायां तदघटितस्यासाधुत्वबोधनार्थंनियमः । अत्रचलडादिर्निरर्थकएवभूतानिकालः पचतीत्यत्रयथा-

तस्यापत्यमित्यादिविकल्पविधावुपग्वपत्यमुपगोरपत्यमित्यादि प्रयोगभङ्गभियाऽणाद्यघटितस्यासाधुत्वं नन्यायसिद्धन्तत्रम- हाविभाषयावाक्यम् । अन्यतरस्यांग्रहणानुवृत्त्यासमास उप- ग्वपत्यमित्यर्थउपगुरिति नप्रयोक्तव्यमिति नियमेनसाध्यम् । स्पष्टञ्चेदमत्रभाष्ये विपरीतन्तुनव्याख्यानात् कर्मप्नित्यमि- त्यत्रयोगविभागादिकन्तुभवन्ताम्निवृत्तार्थप्रतीतिर्यथानियमेन- स्यादित्येवमर्थं परश्चेतिनियमेनतुनिरर्थकोमप्स्यात् । अत्यन्त- स्वार्थिकेतुनास्य सम्बन्धोमहाविभाषयासहविरोधात् । विभाष- याहि स्वविधेयघटितेसाधुत्वनियमेनचासाधुत्वमिति विरोधः । स्पष्टएवेति । अतएवाषडक्षेत्यादावुत्तरसूत्रस्यान्यतरस्यांग्र- हणस्यज्ञापकत्वेन नित्यत्वमुक्तमाकरेऽनुकरणेत्विति । अस्य- त्वगवित्ययमाहेत्यादावितिसप्तम्यन्तेऽन्वयः शास्त्राबोधितेति । शास्त्राबोधितत्वंचशास्त्रबोधितासाधुत्वकत्वम् । अतःपाचक- इत्यादेर्घञ्विधायकशास्त्रबोधितस्यप्रयोगः स्यादिति नापाद- नीयंपरएवेति नियमेनस्वाघटितस्यतस्यासाधुत्वबोधनादनुक- रणेऽतिव्याप्तिवारणायपदत्वं व्याचष्टअपरोति निहतादावव्या प्तिवारणायतदपि परिष्कुरुतेपरोति । अप्रवृत्तत्वञ्चप्रतिबन्धका प्रतिहतप्रवृत्तिकत्वन्तेनलिडित्यादौ ण्वुलाद्युद्देश्यतावच्छेदक- धातुत्वाक्रान्तत्वेपि नाव्याप्तिःहरीएतावित्यादौ च न सा प्रति- बन्धकत्वंचनिहतेतिङन्तेलक्ष्येलक्षणस्येति न्यायःलिडादावु- क्तार्थानामित्यपवादविषयतावाप्रकृतिभावश्चेतिरीत्यातत्रतत्रा- नेकविधंयथासम्भवं बोध्यम् । दिगर्थस्तुवैकल्पिकविधीनांवा- ग्रहणरूपप्रतिबन्धकप्रतिहतप्रवृत्तिकत्वान्नित्यग्रहणवैकल्पिक-

मिति केचित्व्याचक्षते। ङ्याप् प्रातिपदिकार्थत्वाभावेन मा-
त्रपदेनद्वित्वातिरिक्तकालादेर्व्यावृत्त्यात्र प्रथमायाअप्राप्तावपि-
पश्यधावतीत्यादौ द्वितीयास्यादत आह। नेति। आदिना-
ज्योतिष्टोमेनयजेतेत्यादौ तृतीयासंख्येति संख्यावच्छिन्ने ऽन्य-
संख्याभावादित्यर्थः। नन्वन्यसंख्याभावेपि तत्संख्यामादा-
यस्यादत आह। संख्येति। एतेन वाक्यात्सुबुत्पत्तिनिरा-
सायसइत्यपास्तमिति भट्टाः। अन्येतु संख्याभावादित्यस्याप्र-
तीतेरित्यर्थः। ननु कर्तृ कर्मप्रत्यये ऽप्रतीतावपि शय्यतइत्यादौ
तत्प्रतीतिरस्त्येवभावार्थकतिङन्ते ऽत आह। उक्तत्वादिति।
एतेन धावतिपश्येत्यादौ कारकसंख्यायाउक्तत्वेपि क्रियाग-
तामनुक्तामादायस्यादित्यपास्तमिति व्याचक्षते। अपवादत्वा-
दिति। फलस्यव्यपदेशिवद्भावेनकर्मत्वात्। धातुमात्रस्यतद्रु-
पस्थापकत्वात्। स्वमतेसंख्यासत्वाच्चसर्वत्रद्वितीयाप्राप्तेरिति
भावः। क्वचित्तस्यकरणत्वेनान्वयविवक्षायां ज्योतिष्टोमेनय-
जेतेत्यादौ हरिन्नमेच्चेदित्यादौच हेतुत्वेतृतीयाप्राप्तिर्बोध्येद-
न्तुचिन्त्यम्। संख्यामात्रविवक्षायां कालसाधनादेरविवक्षा-
यांतिङादेरप्राप्तौ सुपोवारणायसआवश्यकइति। ननु वर्त्त-
मानकालिकैककर्तृ कपाकसमूहइत्यर्थेपचतीत्यादावणादिव्या-
वृत्त्यर्थः सोऽतआह। तस्येति। ननुतस्येत्यादेः नषष्ठ्यन्ता-
दित्यर्थः। किन्तुतत्सम्बन्धीत्यादिः। एवञ्चतिङन्तादणादिः
प्राप्नोत्येवेत्यत आह। ज्ञापकेति। तिङन्तात्तद्धितश्चेत्तरवा-
दिरेवेतिनियमद्वारेति भावः। एतेन वावृत्तुधातुस्थशेखरवि-
रोधइत्यपास्तम्। वाक्यादत्यन्तस्वार्थिकानिरासायतदिति चि-

न्त्यमिदमितिवदन्ति । सुबन्तस्योपस्थितत्वसिद्धये हेतुद्वय-माह । स्वार्थेति । तस्येतिच बोध्येति । अत्रचविद्वन्मानसेति वक्ष्यमाणवत्तन्त्रं बोध्यम् । प्रथमोच्चारितबोध्यादिति प्रथमो-च्चारितंबोध्यंवाच्यं यस्येतिचतदर्थः । बोध्यबोधकादितियावत् अन्यथाभुक्तेपोति न्यायेनबोध्यादुपग्वादेरर्थात् प्रत्ययस्यबा-धादसङ्गतिः स्पष्टैव । तद्बोध्यबोधकञ्च सुबन्तमेवेति तस्योप-स्थितत्वमिति भावः । घटकतयोपस्थितप्रातिपदिकत्वविशे-षणत्वाभावायाह । प्राधान्येति नदोषइति । यद्यपि प्रकृतेस-र्वस्यसुपीत्यस्य प्रवृत्त्याप्रातिपदिकमपि न तथाप्युपलक्षण-न्तदिति भावः । उंच्छादिपाठम् प्रमाणयन्नाह । स्पष्टञ्चेति । अतएवसर्वेति । तत्ततदन्तसप्तमीत्वादेवेत्यर्थः । अन्यथाब-हुव्रीहिकालेऽन्तोदात्तत्वात्तस्यैव पूर्वपदप्रकृतिस्वरेणातिदेशः स्यात् । धर्मिग्राहकमानान्न्यायसङ्कोचादेवेति तुनातएवेत्य-स्यार्थः । तदसङ्कोचेपि । पूर्वंलुक्यङ्गत्वात्सर्वस्वरेप्रकृति-स्वरेणतत्वसिद्धेः । कुमारेत्यादिधर्मिग्राहकस्यभाष्येसाक्षा-दनुपलंभादुदाहरणंप्रमाणयति । बहुतरेति । नन्वयस्कुम्भी-त्युदाहृते प्रातिपदिकरूपेण कुम्भत्वादिनाग्रहणेप्रवृत्तिलाभेपि तद्व्याप्यबहुव्रीहित्वादिनाग्रहणेप्रवृत्तिर्न्नस्यादत आह । स्त्री-प्रत्ययेति तद्रहितेदृष्टाइति शेषः । तद्रहितत्वञ्चतत्प्रकृति भूतमेव। अतएवनद्युत्तरपदादित्यर्थेप्युत्तरपदत्वस्य विशिष्टेऽति देशात् कप्स्यादित्यपास्तम् । उत्तरपदत्वस्यप्रकृतौ दृष्टत्वा भावात् । एतत्ध्वननायैव समभिव्याहारइति । अन्यथात द्धितकमेवस्यात् । विशिष्टेति तन्मात्रविशिष्टएतेन दृष्टयामा

लयेत्यत्र तत्प्रकृतौ मालायां दृष्टप्रातिपदिकत्वस्य दृष्टामाले-
ति विशिष्टेऽतिदेशात्प्रातिपदिकावयवत्वेन लुक् स्यादित्यपा-
स्तमिति केचित पाठकग्रन्थउत्तरमितितत्वम् । वस्तुतस्तु
समासान्तानामलौकिकेप्रवृत्त्यातत्रच सुपःसत्त्वान् नदीचरमा-
वयवकत्वं बाधितमतो नद्यन्तप्रकृतिकसुबन्तोत्तरपदकइत्यर्थो-
बोध्यः । इत्यादेःसिद्धिरिति । आदिनायुवतिकाया अन्य-
थान्तरङ्गत्वादेवङापोऽपूर्वमुत्पादे सिद्धेस्त्रीप्रत्ययान्ताच्चेत् ङाब-
न्तादेवेतिनियमार्थत्वापत्त्याप्यूङोऽपूर्वमनुत्पत्तावसिद्धिः स्या-
त् । मानन्तु प्रत्याख्यानपरं भाष्यमेव । एतच्चेति । ङाब्ग्रहणा-
सम्बन्धइतीति प्रत्ययाद्यतोत्यादिनाऽत्यन्तस्वार्थिकपरिग्रहः ।
यूनोतिरिति । उक्तार्थेतिन्यायस्तु स्त्रीप्रत्ययप्रकरणेनेति प्रत्ययार-
म्भाद्बाध्यतइति भावः । एवञ्चेति । लक्ष्यानुरोधेनतस्यतद-
न्यपरत्वेनेत्यर्थः । आरभ्यैत्यनेनसमासान्तपरिग्रहः पठिते-
ष्विति शेषः । व्याख्यानादिति । ङाब्ग्रहणस्य स्त्रीप्रत्ययमा-
त्रोपलक्षणत्वस्य प्रत्याख्यानानुरोधेनावश्यकत्वेन तद्भिन्नतद्धि-
तस्यैवतेनग्रहणमिति । सूत्रमतेपि यूनस्तिरित्यत्रतदसम्बन्धः ।
अत्यन्तस्वार्थिकादिषु तुतेषामतिरिक्तार्थाभावेन परिपूर्णमिति
न्यायाविषयतयासुबन्तात्तद्धितइति सिद्धान्तस्यङापोः प्राक्
प्रवृत्तेश्चाभावात्तदसम्बन्धः । न्यायसिद्धेर्थेसम्मतिमप्याह । सर्व-
स्येति । तत्रभाष्यउक्तार्थासंस्पर्शादाह । कैयटइति । अत्र-
केचित्प्रत्ययवतिष्ठन्ते तत्रहि भाष्येपदग्रहणंकर्तव्यंसमासनिवृ-
त्त्यर्थंसप्तपर्णइत्युक्तं यदासप्तसंख्याकपर्णविशिष्टोवृक्ष एक-
त्वादिसंख्यानालिङ्गितो वीप्साविषयव्याप्तिबोधसमयेवृक्षग-

तैकत्वस्याननुभवाद्विभक्त्युत्पत्तेः प्रागेवसमासस्यप्राप्तिरपद-त्वान्नभवति । कृतेस्वादौ पदत्वेपितदर्थसंख्यालिङ्गितार्थेवी-प्सितत्वाभावान्नभवतितदालिङ्गितेवीप्साविवक्षायान्तु भवत्ये-वघटंघटंपश्येतिचतद्भावः । सप्तसंख्यानिपर्णानिवीप्स्यन्ते नतु तद्वान्वृक्षइति कैयटस्तुचिन्त्यएववृक्षादेरवीप्सितत्वेविभक्त्य-न्तेइवद्विर्वचनाप्रसक्त्यापदग्रहावश्यकत्वासङ्गतेः ततःतद्धितमि-वृत्त्यर्थञ्च द्विपदिकेति स्त्रीत्वद्वित्वलक्षणलिङ्गसंख्यान्वितःपा-दार्थोवीप्स्यते नत्वेकत्वाद्यालिङ्गितइति वीप्साविषयश्चात्रा-वोवसमयएकत्वादेरननुभवात् । सुवुत्पत्तेः प्राक्पूर्वान्ततत्वेन तद्धितान्तस्यटाबन्तस्यद्विर्वचनं प्राप्नोतिपदाधिकारात्तुनभव-तिकृतेसोहल्ङ्यादिलोपेचपदत्वेपि तदर्थकस्यैकत्वालिङ्गितस्या वीप्सितत्वान्नभवतितत्वेतुभवत्येवेति भावः । यत्तु कैयटः स्त्रीत्वस्यापि वीप्सायामनन्तर्भावमाहतन्नसम्यग् द्विपदि-काभ्यामित्यत्रप्राप्नोतीति वक्ष्यमाणभाष्यासङ्गतेः । नहिलिङ्ग-स्याऽवीप्सितत्वेटाबन्तेस्वादिष्वितिपदत्वेपि द्विर्वचनप्रसक्तिर-स्तीति तच्चतद्धितोत्पत्तेः प्राक् समासस्यनद्विर्वचनमपदत्वा दित्यभिप्रायकमाह । तदपि न प्रकृतार्थस्यभाष्यानभिप्रेतत्वा-त् तथाहि तद्धितनिवृत्त्यर्थमित्यस्य तद्धितान्तनिवृत्त्यर्थमि-त्यर्थः । नहि तदुत्पत्तेः प्राक् तदस्तिसमासनिवृत्त्यर्थमित्य-नेनगतार्थत्वाच्च । किञ्चतथाभिप्रेतत्वेहि तद्धितेनोक्तत्वान्न भवतीति । तदुत्तरन्तरप्रत्याख्यानभाष्यासङ्गतिः नहि ततः प्राक्तेनोक्तम्सम्भवतीति पुनःसर्वथानिरवकाशत्वेन तद्बाध-कत्वात्ततः प्राक् तदप्रवृत्तेश्च वुनिकृतेपि तत्रकौण्डिन्यन्यायेन-

बाधेऽपवादेकृतउत्सर्गाप्रवृत्त्याद्वित्वंनप्राप्नोत्येवेति तत्रापिभाष्यमसङ्गतमेवेतितुन वाच्यम्। उत्सर्गेद्वित्वेकृतउक्तत्वाद्वीप्सायां वुनोऽप्राप्त्यातन्न्यायविषयाभावात्। हल्ङ्यादिलोपेकृतेपदत्वात्। द्विपदिकाइति बहुवचनान्तंपाठ्यमितिच तदुक्तं चिन्त्यम्। तत्पाठस्यापि योजितत्वात्। यत्तुविवरणेद्विपदिकेत्युत्तरंमाशसइत्यपपाठः पदग्रहणेनापि तत्रतन्निवृत्तेरशक्यत्वात्। शसन्तस्यापिपदत्वात्। तत्पूर्वभागस्यापिसुबन्ताच्छसउत्पत्त्यापदत्वादित्युक्तं तत्रतत्पूर्वभागस्यापि स्वादिष्वितिपदत्वादिति युक्तःपाठोऽत्यन्तस्वार्थिकानांसुबुत्पत्तेः पूर्वमुत्पत्तिरिति। पूर्वमुक्तत्वादिति। प्रकृतग्रन्थार्थस्त्वित्थं द्वित्वसंख्यायुक्तेति स्त्रीत्वयुक्तेत्यपि बोध्यम्। एकत्वेति। कैयटेलिङ्गानन्तर्भावस्योक्तत्वेप्युक्तहेतोरेवतत्त्यागोनन्तर्भावात्। सुबुत्पत्तेः प्राक् टाबन्तस्येति शेषः। तस्यपदत्वाभावाद्द्विर्वचनाभावःप्रयोजनमित्यन्वयो ननु कृतेतद्धितेऽपदत्वात्तेनोक्तत्वाद्वाद्विर्वचनाभावेपि तदुत्पत्तेः प्राक् समासस्यकुतोनेत्यत आह। सेति। अभावेनेति। तस्याःसंख्यापेक्षत्वेन वहिरङ्गत्वात्तद्धितस्यच स्वार्थिकत्वेनान्तरङ्गत्वात्। तेन बाधादिति भावः। यद्यपि वुनोबाधकत्वात्तद्विषयेद्विर्वचनाप्रवृत्तिरिति वक्तव्यंतथाप्यपदत्वात्प्राप्तिरेवनेत्युक्तेरेवन्याय्यत्वादेवमुक्तमिति। प्रत्याख्यानेतुतथैव पूर्वमप्रवृत्तिरिति भावः। ननूपजनिष्यतेति न्यायेनभत्वेनपदत्वबाधात्। प्राक् तद्धितोत्पत्तेः समासेकृतेपदत्वाभावात्तदभावइति कैयटःसुयोज्योऽत आह। पुंयोगेति। अपिनापूर्वोक्तकैयटसंग्र-

हः । एतेनोक्तार्थस्य भाष्यासंस्पर्शसूचितवानन्यथासूत्रेपीति वदेत् । इनुगन्तत्वरूपेति । समासविधौहिगतित्वज्ञानंसमर्थत्वज्ञानंचेतिद्वयमेव । अण्विधौतु प्रातिपदिकत्वंसमर्थत्वमिनुगन्तत्वंचेतित्रयोऽतस्तस्याधिक्यम् । न च पदद्वयाश्रितत्वेन समासस्यापि बहिरङ्गत्वेनोभयोः तयोःपरत्वादणेवस्यादिति वाच्यम् । सांकूटिनादिलक्ष्यानुरोधेनोक्तान्तरङ्गत्वस्यैव पुरस्कारादिति कैयटाशयः । एतेन समासस्यान्तरङ्गत्वेपि प्रतिपदोक्तत्वादण्स्यादित्यपास्तम् । इनुणन्तनिष्ठधर्मतयोपस्थितावण्विध्युपस्थित्याऽण्विधेर्विलम्बोपस्थितिकत्वात्वस्युततन्निष्ठावश्यकसमर्थत्वरूपधर्ममात्रोपस्थितौ समासविध्युपस्थित्यास्तयैवतत्वात् । असङ्गतिरिति । ननु तदन्तात्तदुत्पत्तावपि परिभाषाङ्गीकारेण सुबुत्पत्त्यनन्तरंप्राप्त्या तदुत्पत्तेः प्रागेवान्तरङ्गत्वात्समासेततस्तदुत्पत्तौ समुदायादणितांकुटिनसिद्धिः तदनङ्गीकारेतुद्वयोरपि तदुत्पत्त्यनन्तरंयुगपत्प्राप्त्यैकपदाश्रितत्वेनान्तरङ्गत्वात्केवलादणिसङ्कौठिनमितिस्यादितिरीत्याभाष्यस्य सुयोज्यत्वेनकाप्यसङ्गतिरिति चेन्न । सत्यामप्येतस्यामवयवादुत्पत्तिः प्राप्नोतीति तदुत्तरभाष्यानुरोधेनास्यापि भाष्यस्योक्ताभिप्रायकत्वेनैव व्याख्येयत्वेनासङ्गतेस्तादवस्थ्यात् । नहि सुबन्तात्तदुत्पत्तिरिति नियमेऽवयवात्तदुत्पत्तिः प्राप्नोतीत्यवयवस्य तदत्वाभावाच्च नतद्भाष्यंसङ्गतंस्यात् । इदं प्राचामनुरोधेन वस्तुतःसंचस्कारेत्यादौ सुटइवान्तरङ्गतरार्थकगतिनिमित्तकत्वेन समासस्यान्तरङ्गत्वं बोध्यम् । तदाह । अन्यत्रेति । एतेन तत्त्वेनतत्त्वाङ्गीकारेस्वग्रन्था-

न्तरविरोधइत्यपास्तमिति केचित् । स्वौजस् । द्वन्द्वइति । जसादौरुत्वं सौत्रत्वान्नेति भावः । वस्तुतस्तिप्तस्झीत्यत्रवक्ष्यमाणरीत्यालाघवेन निर्विभक्तिकानुकरणभूतानिपृथक्पदान्येत्यरुत्वं न्याय्यमेवेति बोध्यम् । विभक्तिश्च । नन्वेवंत्रोणित्रीणीत्यस्याननुवृत्तावष्टनआवेत्यादौ निर्वाहेपि प्रथमयोरित्यादौ दोषोऽत आह । प्रथमेति । वाच्ययोरित्यलत्रिकयोरिति शेषः । व्याख्यानादित्यस्यार्थमाह । अन्वर्थेति । औजसोरिति । स्वावोरिति तुनोक्तम् जस्व्यावृत्त्यर्थकान्नादिचीतीजग्रहात्सोरजादित्व ज्ञानंशिवोऽर्च्यइत्यत्रबोध्यम् । तस्माच्छसइति लिङ्गमप्यत्रबोध्यम् । सुप्संज्ञेति । तिङ्संज्ञाप्येवमेव तदन्तात्तरबाद्यापत्तेः । रामइहेत्यादौ निघातापत्तेश्च । दीर्घापत्तेरिति । सन्निपातपरिभाषयादीर्घवारणेतुसर्वेदेत्यादौ सर्वस्यसुपोत्याद्युदात्तत्वापत्तिर्बोध्येत्यन्यत्रविस्तरः । बहुषु । नग्रहणमिति । तेन बहु×पर्वतइत्यादौन नत्वात्रपरत्वादेकवचनंस्यादिति वाच्यम् । तस्यौत्सर्गिकत्वेनतस्यतदपवादत्वादिति वदन्ति । कोशादपि वृद्धव्यवहारस्यप्राबल्यमितिध्वनयितुमाह । भर्तृदारेति । अयंस्मार्तप्रयोगः । अन्त्यःशावरभाष्यीयः । रुत्वइति । सुबन्ततयेति । हेतौ तृतीयासुबन्तताहेतुकंयत्पदन्तदेकदेशविकृतन्यायेन कृतरुत्वइत्यर्थः । यथाश्रुतंतुनसाधुतेनन्यायेन विकृतावयवनिबन्धनकार्यस्यानतिदेशात् । ममहेतूपादानन्तूपदेशाप्रवृत्तिद्योतनाय । इदञ्च पक्षद्वयेपि बोध्यम् । अग्नीइत्यत्रैवरुत्वस्यासिद्धत्वात् । सुबुक्त्या प्रवृत्त्यापुनःपदत्वमित्यादिप्रागुक्तञ्चन विस्मर्तव्यम् । सरूप ।

विभक्त्यन्तानांसरूपाणामेकशेषइत्यर्थइति पक्षसाधारणंफलं-वक्तुमाह। भ्यामोति। यद्वै वकारापकर्षाभावउपलक्षणस्याति प्रसङ्गमात्रंभ्यामोति सिद्धान्तपक्षेत्वौजसादावपि तद्व्यावृत्तिः फलं बोध्यम्। ध्वनितञ्चेदंभ्यामादावपीत्युक्त्याव्याहृति। त-द्धितादावितिे।आदिनाक्यङ्हारितं हारिणंहरिणीयतेहरिताय त इत्यत्रननुसत्यप्येवकारापकर्षेमातृमात्रोरेकशेषोदुर्वारोऽलौकिकं औजसादावपि सारूप्यादत आह। लौकिकेति। यद्य-पि विरूपाणिनेत्यर्थपर्यवसानात्। तत्र ससुवारएवतथापि अन्यतरीयंलौकिकम्। अपरीयमलौकिकमादायाऽव्याप्तिवार-णंशेषफलं बोध्यमितिवदन्ति। अत्रावैरूप्यमपि प्रातिपदिकां-शएवतेन संज्ञासर्वनाम्नोःप्रथमाद्योरेकशेषोन्यथाजसिप्रथमेप्र-थमाइति वैरूप्यान्नस्यादिति बोध्यमित्यन्ये। नन्वेकशेष-स्यसहविवक्षाविषयत्वेकथमन्यत्रतदुक्तिरत आह। द्विर्वचने-ति स्पष्टार्थमिति सूत्रारम्भसामर्थ्यात्। वक्ष्यमाणेतरार्थस्या-पि बोधयितुंशक्यत्वेनचाक्रियमाणएकइति स्पष्टतयाबोधनार्थ मित्यर्थः। एकस्यामपीति। समानायांत्वित्यर्थः। बोधयितु-मिति। अन्यथाचालनोन्यायेनभिन्नविभक्तौ वैरूप्यमादायास म्भवः स्यात्। रामौरामाभ्यांस्वसास्वसारा वित्यादौ भिन्नवि-क्तौसर्वत्रवैरूप्यस्यसत्वादिति भावः। नैकशेषइति। तेनवृ-द्धोयूनेत्यादिविरूपैकशेषस्य लक्ष्येगार्ग्यौगर्गा इत्यादौ समा-हारएकशेषेणनगार्ग्यइत्येकवचनंनविभक्त्यन्ततन्त्रन्तुनवैरू-प्यात्। सरूपैकशेषस्थलेतु तन्त्रेणरामइत्यस्यदुर्वारत्वात्। अन्यतरस्यामित्यनेनेति। फलसेनेतिवार्तिकस्यविकल्पेनैकव-

द्विधायकत्वोक्तेः । आश्विकादावप्राप्तैकवद्भावविधानार्थमिति वाच्यम्। ननु तस्यविधित्वेप्यवहुप्रकृतिकआश्विकादिद्वन्द्वश्चेति नित्यैकत्वेप्राप्ते विकल्पार्थमिदमिति कथंज्ञापकत्वमिति चेन्न । तेनप्रकरणेनसमाहारगतैकत्वानवादात् । तत्रद्वन्द्ववाच्यसमाहारेवर्तिपदार्थगतसंख्यारोपाभावेप्येकशेषवाच्यसमाहारेतदभावेबोजाभावात् । ननुज्ञापकेनसमाहारएकशेषाभावेपि द्वन्द्वे घटघटमिति स्यादेवातःसामान्यतोज्ञाप्यशरीरमाह। समाहारेवृत्त्यभावेति। लुप्तेति। शेषशब्दस्यकर्मसाधनत्वेलुप्तस्वंतंभावसाधनत्वेतु लुप्तङसन्तम्। अतएवावस्थानमिति व्याख्यानंसङ्गच्छते न च भावसाधनत्वआकडारेति सूत्रस्थभाष्यविरोधः तत्रह्येकेतिसम्बन्धादेकग्रहणमत्रत्यंप्रत्याख्यातमिति वाच्यंभावसाधनेशेषशब्दे विभक्तिविपरिणामेनेति विवरणेनैवसमाधानात्। तत्रैकपदार्थेश्रूयमाणेत्यस्यफलंयुष्मदीति सूत्रेस्फुटीभविष्यति। द्विवह्वोरिति । संख्यापरत्वात्साधुत्वम् । अंशाविशिष्टोदात्तकत्वेसत्यं शाविशिष्टानुदातकत्वं गृहीत्वोदात्तानुदात्तयुक्तोपि स्यादेवेत्यत आह । कदाचिदिति । द्व्युदात्तवत्त्वेति । द्वावुदात्तवन्तावश्वशब्दौ यस्यतत्त्वंकर्मधारयेतुमतुब्नस्यात्। उदात्तशब्दोधर्मिपरःतस्यैवग्रहणेमानाभावादिमंगृहीत्वास्यादेवदोषः स्वरभिन्नेति । तृतीयासमासः। दशान्तेति। अष्टादशान्त्यइत्यर्थः। अग्रएकोनविंशत्यादाविति बोध्यम् । एकादशादित्यागेबोजाभावादित्यन्ये। एकशेषेति। एकश्चएकश्चदशानदशचेत्यादाविति भावः। अत्रद्वन्द्वानभिधानंसरूपेतुद्वादशादाव-

स्येवातएव विरूपसंख्यावाचि द्वन्द्वानभिधानप्रतिपादकेत्पदादितः शेषेपुंनपुंसकेत्यत्रशेखरेनत्रान्तानामित्येव पाठः । विंशत्यादौत्विति । संख्यापरिच्छिन्नसमुदायपराणां नतुसंख्येयमात्रपराणां ब्राह्मणानांविंशतीत्यादौ विंशतिसंख्यावच्छिन्नोद्वौसमुदायावित्यर्थंप्रतीतेः विंशतिघटाइत्युक्ते चत्वारिंशतामप्रतीतेः । नुट् । नुटुषः प्रत्ययस्येति वाच्येयोगविभागादस्यानित्यत्वेनचुंचुवादौनत्वमिति प्रकारस्यभाष्यानुक्तत्वेनायुक्तंध्वनयन्नाह । यादित्वेति । टीटन्तोप्येवमेवेत्वाभावइति बोध्यम् । असिद्धत्वाच्चनांत्यमितिपूर्ववत् बहिरंगासिद्धत्वादितिभावः । ननुसूत्रेचकाररूपवलपरत्वात् तत्प्रवृत्तावपिप्रयोगेत्वित्संज्ञालोपाभ्यामेव तन्निवृत्तिर्वाच्येति कथंनांत्यमितिचेन्नाऽव्यवसितांतत्वाभावात् नन्वंतरानित्यस्यप्रतिपक्षिणिवाच्येति । तथोक्तिरयुक्ताऽत आह । अनन्तरापेक्षयेति । एङ्ह्स्वात् । पंचम्यंतइति । नन्वेवमपिकतरदित्यादावति व्याप्तिर्दुर्वारैवयस्मात्कतरशब्दात्संबुद्धिर्विहितासआदिर्यस्यादड्डादेशाकारविशिष्टस्यतस्यह्रस्वांतस्यतदादित्वेनततः परस्यदकारस्यसंबुध्यवयवहल्त्वेनेति चेन्न। परिभाषायांतदादिपदेवहुव्रीहिसत्वेपि विहितप्रत्ययप्रागभावएवगृह्यतेप्रत्ययेङ्गमित्युक्तरसूत्रेतस्यैव संभवेनार्थाधिकारानुरोधात् तथाविधस्यचप्रकृतेर्ह्रस्वांतत्वाभावात् हलश्चततः परत्वाभावादतएवतत्रतत्प्रत्ययग्रहणेशब्दस्वरूपंविशेष्यमादायतदंतविधिरित्युच्यतउक्तार्थंकतदादिपदस्यप्रत्ययांतेनसामानाधिकरण्यासंभवेतस्यविशेष्यत्वासंभवात् नन्वेवंप्रदेशेतेनतस्यकथंसामानाधिकरण्यमिति

वेदन्वयादिवाधेनशब्दाधिकारस्वीकारादिति गृहाणपदोपस्थाप्यतदादिपदेऽर्थवानेवाङ्गपदार्थः । अर्थाधिकारादिति नकापि दोषशंकलेशःविकरणांतस्याप्यर्थवत्त्वमस्त्येवकतरदित्यत्रतुदकाररहितस्यनेति प्रकृतसूत्रस्थभाष्यमपीहमानंतवहि विहितविशेषणंह्रस्वग्रहणंयस्माद्ध्रस्वात्संबुद्धिर्विहितेति । विधीयतेऽस्माद्विहितंवाहुलकादपादानेनिष्ठाह्रस्वपदंतद्विशेषणंततस्तदंतविधिः । यस्मात्संबुद्धिर्विहितातस्माद्ध्रस्वान्तात्परःसंबुद्धेर्हल्लुप्यतइति सूत्रार्थःयथाश्रुतंतुनयुक्तम् । हेरामहेसहेगौरीत्यादावव्याप्तेः तदादीत्यस्योक्तार्थकत्वन्ध्वनयितुंविहितेति प्रकृताभिप्रायकमुक्तमितिदिक् । स्पष्टमिति । अयमेवात्राक्षेपपदार्थएङादेस्तद्विशेषणत्वात्तदन्तविधिरतएवात्राङ्गसंज्ञासूत्रानुपन्यासः । ननु प्रकृतिमंतराप्रत्ययानुत्पत्यातेनतदुत्पत्तिर्भवत्येवात आह । किंन्वेति । ननुरात्रिभुक्तिरपिपीनत्वजनिकैवेति तत्रापितज्ज्ञानेतदनपेक्षत्वमेवात आह । शास्त्रइति । दिवाभुंजानत्वेसतिपीनत्वमित्यर्थस्यताद्दशानुमितिंविनापि विरोधग्रस्तत्वात्तत्रलोकेसंभवत्येवसः प्रकृतेतुनतथागमकमिति भावः । ननु तदादेःपरमेकवचनंसंबुद्धिरित्यर्थाज्ञानेप्यपेक्षैवात आह । अतएवेति । नत्वङ्गाक्षेपेणेति । नन्वङ्गाधिकाराभावेङ्गसंज्ञासूत्रस्याप्यभावेन कथं तदाक्षेपंवदेदिति चेन्नाङ्गस्येत्यस्याभावेपि ह्रस्वादंगादिणःषीध्वमित्वाद्यर्थमंगसंज्ञासूत्रस्यावश्यकत्वादङ्गपदेनप्रकृतेर्विवक्षणाच्च । दिगिति । अनुमितस्यशाब्देन्वयित्वाभावाद्विशेष्यविशेषणभावनिबन्धनतदंतविधेरलाभोदिगर्थः । परत्वात्पूर्वेति । लोपेऽपरनिमित्तकत्वेनांतरंगत्वो-

न्द्रावनन्तु प्रतिपदोक्तत्वमस्यवोध्यम् । ननु तवापिहल्सिंबु-
द्ध्यवयवत्वस्यामिसंवुद्धित्वंहस्वांतेऽङ्गत्वमित्युभयतआश्रयणमे-
वेति तत्तदभावेकथंसिद्धिरत आह । तत्स्थोकारेपीति । म-
मतुपौर्वापर्यंनापेक्षितमिति भावः । ननुस्थानिद्वयरूपातिदे-
शेनतस्संभवोऽत आह । ताद्रूप्येति । एतदर्थमेवेत्यस्यार्थ-
माह । यस्येति । असाधारणत्वनिवेशवादिमूलकुन्मतेनश-
ङ्कते । मात्रनिष्ठेति । प्रत्याहारपरामर्शवेलायां लोपश्चवलवत्त-
रइत्युक्तेरुकारनिवृत्त्यातस्यतन्निष्ठत्वमिति भावः । अन्त्यपदस्य-
सादृश्येलक्षणानङ्गीकर्तृ तदीस्यैवसमाधत्ते । विशिष्टेसत्वेनेति ।
त्वन्मतेह्यु करीत्यामध्यगानुबन्धनिवृत्तावपीकः सुपइत्यादिनि-
र्देशान्यथानुपपत्त्याऽऽद्यान्तपदपरामर्शयोग्ययोःप्रागनिवृत्तिरि-
त्यस्यावश्यंवक्तव्यतयास्वपदेनविशिष्टस्यैव परामर्शात्तस्यविशि-
ष्टेसत्वमिति भावः । विशिष्टस्यैवोद्देश्यत्वेनेति । एवंचप्रकृतेऽल्-
वृत्तित्वेपि तस्यनतन्मात्रवृत्तित्वमिति हत्वस्यैवातिदेशोभवत्ये-
वेति भावः । तस्य । संवुद्धिलोपस्य । अनल्विधित्वात् ।
स्थानिसंबंध्यल्मात्रनिष्ठधर्माश्रितविधित्वाभावादित्यर्थः स्वम-
तेपि सोरमित्युक्तत्वादनल्वृत्तिधर्मवत्वेननस्थानितावद्वृत्तिक-
त्वादिद्त्ववदतिदेशोभवत्येवेति वोध्यम् । ननु गुणस्यपरनि-
मित्तकत्वेनवहिरङ्गत्वात् प्रकृतिप्रत्ययसम्बंधिवर्णमात्रानिमित्त-
कत्वेनान्तरङ्गत्वमपीत्युभयोरन्तरङ्गयोः परत्वाद्गुणएवस्यादत
आह । अङ्गाधोति । एवंचतस्यतन्मात्रनिमित्तकत्वमिति भावः ।
एग्रहणेति । स्मृतवादिषुतुगुणेणित्वाद्वृद्धिप्राप्तिरिति भावः ।
सामर्थ्यादेवात्रेति । प्रत्याहारग्रहणस्येति भावः । ननुरामादौ

ह्रस्वग्रहणस्यसाफल्याद्दीर्यादौतयाकथंवार्यैतात आह। गुणेति। अतएव ह्रस्वांशेतदप्राप्तेरेव । असमबलत्वेनपरत्वासम्भवादाह। अभ्युच्चेति। अनवकाशेति। येननेतिन्यायेनोत्सर्गप्रवृत्त्युत्तरमचारितार्थ्येऽपिबाधः । तदप्राप्तियोग्येप्यत्रयोग्यतावर्तमानैवेति नाग्रहइति चभावः । ह्रस्वस्यगुणइक्पदोपस्थित्याराम्येत्यत्रतदप्राप्त्यालोपस्यनानवाकाशत्वमिति बोध्यम्। द्विमात्रेति। कुमारीत्यादौ त्रिमात्रार्थश्चे त्यर्थः । वाच्छन्दसीत्यत्रानुवृत्त्यर्थश्चदीर्घेकृतेपरत्वासंभावादाह । विहितेति । यद्यपिसकाररूपावयवविशेषणत्वेनासम्भवः सुपरिहरस्तथापिसुपुरुषास्त्रियइत्येतदव्यावृत्तयेतदुक्तमिति बोध्यम्। एतानिति। अकःपरोयः शस्तस्यनइत्यर्थेनादेःपरस्ये त्यकारस्यनेसुपिन्नेतिदीर्घेसंयोगांतलोपरामानितिसिद्धावपिहरीनितिनसिध्येत् तदर्थमगंतात्पुंसोविहितस्येत्यर्थेतुयेननेति न्यायेनदीर्घबाधापत्तिः । एतेननुमिसंयोगान्तलोपेनुंकिसंयोगादिलोपेवानदूषणमित्यपास्तम् । पञ्चमीसमासेन स्थानिवत्त्वाद्दीर्घोत्तरमपिनुमादेः प्राप्त्यातक्रकौण्डिन्यन्यायप्रवृत्तेः सुवचत्वात् वस्तुतः पूर्वसवर्णदीर्घान्तात्पुंसस्तदादेः परस्ये त्यर्थोन्याय्योविहितेति तुफलितार्थकथनपरं द्वितीयतदन्तविधिप्राप्तातिप्रसङ्गभगायवेति बोध्यम् । अट्कु । पर्याणच्चेति । व्यावधायकस्यपदस्यणत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वइति वक्ष्यमाणस्यणत्वाश्रयप्रत्ययातिरिक्तेत्यर्थः । प्रत्याख्यानेन फलाभेदायेतिनिषेधप्राप्तिरत्रेतिबोध्यम् । योगार्थस्येषत्स्पृष्टलकोतिप्रसंगाद्रूढ्यर्थमाहतत्रानस्वारेत्यादिना । उरःकेति । उरसिकंयस्यउरः का-

यतोतिवाविग्रहः । अन्येनव्यवेति । उक्तयुक्त्यनंगीकारेऽयमर्थो-
नस्यात् । न्यासेनसिद्धइति । न च चुटुत्वित्याद्युक्तौमृत्स्ने-
त्यादाविवादर्शनेत्यादावपणत्वम्वारितं स्यादेवञ्चादर्शनेत्य-
त्रणत्वसिध्यर्थमेव तथानोक्तमिति कुतोनस्यादिति वाच्य-
म् । चुटुत्वेत्युक्तावपिरषाभ्यामिति पञ्चमीनिर्देशाद्व्य-
वधानमात्रेप्राप्तावेतैरेव व्यधानेभवति । आदर्शनेत्यत्रा-
वधानमात्रेप्राप्तावेतैरेव व्यवधानेभवत्येवेति नियममुखेनव क्तुंशक्य-
ड्डादिसहितव्यवधानेनभवत्येवेति नियममुखेनव क्तुंशक्य-
त्वादित्याहुः । बहुशब्दंवायेनेति शेषभाष्यस्थतवर्गायनु-
स्वोपलक्षणत्वेवोदधांते व्याख्यातत्वेनमात्रपदविशिष्टन्या-
सेपितात्पर्यंबोध्यम् । न्यासश्च निषेधप्रकरणेसत्त्वेर्थंनभ्वि-
ति प्रकरणेपदेनव्यवायेचुटुतुलशर्मात्रेणेति विधिप्रकरणंच-
रषाभ्यामित्यस्यानन्तरम् आङइति पञ्चम्यंतस्याधिकारःका-
र्यःशर्चायोगबाहभिन्नस्तुसाहचर्यात् तेनक्रिमिशब्दादाचक्षा-
णणिजन्तात्क्विपि शब्दपराञ्शब्देन षष्ठीसमासेशसिऽल्लोपे-
क्रिम्णःपश्येत्यत्रशराव्यवायात् णत्वंनस्यादिति फलभेदोन ।
अत्रन्यासएकोनविंशतिमात्राविंशतिर्वायथान्यासेसप्तदशमा-
त्राःनुम् ग्रहणत्यागेपञ्चदशवेति गौरवमभिप्रेत्यगुरुन्यासे-
त्युक्तमाद्ये कल्पेतुमात्रपदाभावेन पञ्चदशतास्तथापि गुर्वि-
त्यस्यलघुभिन्नेत्यर्थइति नदोषः । प्रतिपत्तिगौरवादस्यैकदेश्यु-
क्तित्वम् । प्राप्तिरेवनेति । ननु निषेधमुखेनप्रवृत्तिरितिपक्षे-
व्यवायेणत्वम्भवत्यडादिभिन्नैराक्षरसमाम्नायिकैर्व्यवायेनेत्य-
र्थात् प्राप्तिरेवेनेति सत्यंस्वसिद्धांतभूतविधिमुखेनप्रवृत्तिरि-
ति पक्षेत्वाक्षरसमाम्नायिकातिरिक्तैः व्यवायेणत्वंभवत्यडादि-

भिर्व्यवायेणत्वम्भवतीत्येवार्थात्तस्यचात्रसत्वात्प्राप्तिरस्त्येव ।
किञ्चव्यवायेपीत्यनेनकृशेनेत्यादौणत्वापत्तिरनाक्षरसमाम्नाय-
काऽज्भक्त्याव्यवायसत्वादिति चेन्नाट्कुप्वाङ्नुम्व्यवायेपि
पूर्वंवव्यवायेपीत्यपकृष्यतेरषाभ्यामव्यवहितपरस्याडादिव्य-
वायेणइत्यर्थात् । रषाभ्यामव्यवहितपरस्यानाक्षरसमाम्ना-
यिकव्यवायइत्यर्थाच्चाव्यवायेपीति सूत्रेपूर्वसूत्रानुवृत्त्यामृगेणे-
त्यादौ नदोषः पूर्वोक्तवार्तिकमतेप्येवंसत्वेन तदात्वितिविशे-
षोपादानकथनमिति तुचिन्त्यंप्रत्याख्यानेति न्यायप्रवृत्तौतुफ-
लभेदान् नस्यादितिभावः । तस्मात्प्रगुणःकृतात्मसंस्कारःप्र-
धानंप्रतिपद्यते प्रधानस्योपकारेहितथाभूयसिवर्ततइतिन्याय-
शरीरं यस्मात्परोयःप्रत्ययोविधीयतेतत्प्रत्ययोपश्लिष्टतदाद्यंग-
मित्यर्थेनसिद्धेपरिभाषोपस्थितिमुधा परनिमित्तकत्वंतुपरस-
त्ताज्ञाप्यसत्ताकत्वेनसुलभमिति वक्ष्यते । असिद्धवदत्रेति ।
स्थानिवत्वन्तुनोक्तम् पदसंस्कारआदिष्टादचः पूर्वत्वाभा-
वाद् वाक्यसंस्कारेपि लोपेतत्प्रासावपोयङिनपदान्तेति निषे-
धात् । नातिरिक्तेतिविकारकृतमतिरिक्तत्वंतुन तेनजहिविं-
शकादावसिद्धत्वंस्पष्टंचेदमुद्द्योते यत्तुशब्दरत्नमनूद्योपातता
ऽव्यापकधर्मावच्छिन्नेत्यादिनाक्लिश्यन्तेतन्मुधैवव्यतिरिक्तस्यै
वाभावेनदोषलेशाभावात् । ननुसमानाश्रयत्वमसिद्धत्वाश्रय-
शास्त्रसम्बन्धिनिमित्तान्यूनानतिरिक्तकार्यिनिमित्तान्यतरकत्व-
मित्येवास्तुमास्तुचविधिग्रहणमत आह । भनक्तीति । न च
सिद्धान्तेपि भिदचइति विधानमाश्रित्यांगत्वंदुर्वारमिति वा-
च्यम् । तेनाचः परत्वस्याज्ञातस्यज्ञापनेपि प्रत्ययस्यापूर्वबोध-

नाभावात् । अतएवभनक्तीति भाष्येप्रयुक्तंभूसुवोरित्यत-
स्तिङीत्यनुवृत्याऽऽनेमुगिति सुत्रेभाष्येस्पष्टतयादीर्घवारणेतु-
स्त्रोइ पश्यतीत्यत्रैव स्त्रीशब्दस्यनसंज्ञापत्तिर्बोध्या ननु विक-
रणान्ते दीर्घआरंभसामर्थ्यात्सिद्धः। नचयायामीत्यादौ यङ्लुगं-
ते पुत्रीयामिवोभूयामहेचिकोर्षामीत्यत्रशबेकादेशस्यान्तवत्वे-
नाङ्गत्वेनचरितार्थइति वाच्यम् । आद्यस्यच्छन्दोविषयत्वात्
अन्येषुतुकृदतिङ्सूत्रीयभाष्यरीत्याशबेकादेशस्यस्थानिवत्वा-
त् प्राप्तिरेवनेत्यत आह । करोमीति । उद्योतीयफलप्रदर्श-
नमप्युक्तरीत्याऽरूचिग्रस्तं बोध्यम् । ननु प्रत्ययेङ्गमितीयतैव-
सिद्धेपदत्रयकरणाद्विहितपदाध्याहारेविधिग्रहणंमुधैवेतिचेन्न।
प्रत्यासत्तिप्रतिबन्धेन प्रत्ययभेदएवप्रवर्तनेन चारितार्थ्यसंभ-
वात् पदत्रयस्यफलन्तुहरिर्भवामीत्यत्र दीर्घःकेवलेनेति बोध्यम्।
टाङसि । अङ्गाधिकारेपाठोऽव्यर्थः स्यादिति । उक्तलक्ष्यसि-
ध्यर्थमावश्यकपरिभाषाद्वयसंचारेणैवानंगादंतस्यटेत्यादिव्या-
वृतौ सिद्धायांविभक्तिविपरिणामेनात्रव्याख्यानंतवनिष्फलं-
स्यादितिभावः । अंगनिमित्तेत्यर्थेतुनतयोरावश्यकसंचारक-
त्वम् संचारेतुपाठोनकार्यइतिस्पष्टंभाष्ये । एतेनतआश्रित्य-
पाठवैयर्थ्यस्यभाष्येसिद्धांतितत्वेनतदापादनमसंगतंस्यादित्य-
पास्तम् । ङेर्यः । संप्रसारणइत्यादिनिर्देशस्योभयोरग्रहेज्ञापक-
त्वसंभवेपिसंप्रसारणइतिपररूपेणचतुर्थ्यन्तमेव। कष्टायेति। स-
प्तम्यंतमेवेत्यपिवक्तुंशक्यत्वेनसप्तम्याएवग्रहाभावेमतत्वासं-
भवादाह व्याख्यानेति तच्चसर्वनाम्नःस्मैस्मिनौङसेःस्मादि-
त्येवसिद्धे ङिग्रहणरूपंप्रतिपदोक्तरूपञ्चेत्यन्ये । उपजीव्येति

न्यायाश्रयणे लिंगंतुवृद्धावित्यादिनिर्देशः। यत्तुवाम्विह्वस्वश्चेत्यं-वासिद्धे ङितिह्रस्वश्चवामीतिसूत्रद्वयंलिङ्गन्तद्धिश्रूणामित्यादौ-नुडर्थंनुव्यजादित्वस्यविनाशादिति तन्न वामीत्युक्तेप्यात्वं-पुग्विधेरिति न्यायेनौपदेशिकसन्निपातविघातसत्वेन चारि-तार्थ्याभावादचीत्युक्तेपि सामर्थ्येनपरिभाषायावाधाच्च । तंवि-हन्तीति ननुयादेशनैव सन्निपातनाशाद्दीर्घस्यकथं तद्विघात-कत्वमितिचेन्न । तेनपूर्वापराभावसन्निपातविघातेप्यदन्तां-गेतिविशेषणसन्निपातस्यसत्वेनदीर्घस्यतद्विघातकत्वात् । स-न्निपातलक्षणप्रवृत्तेः प्रागव्यवहितोत्तरंवायः सन्निपातएत-दन्यतरविघातकस्यानिमित्तमित्यर्थस्यतिस्रइत्याद्यनुरोधेनाव-श्यकत्वाच्च यञादित्वेति । एवञ्चपरनिमित्तकत्वेन तत्व-मितिभावः । एवमुक्तिस्त्वधिकापेक्षत्वेनवहिरंगत्वमितिमत-साधारण्येनतत्वसूचनाय । नात्रेति । एवंचविघातरूपविशेष-णज्ञानाभावेनतत्कर्तव्यरूपविशेषणज्ञानाभावेन तत्कर्तृकत्व-रूपविशिष्टज्ञानासंभवात्तदप्रवृत्तिरिति भावः । अत्रासिद्धत्वं-यादेशदृष्टानपरिभाषादृष्टातस्या अन्तरंगत्वस्यदुरुपपाद-त्वात् । परिभाषादृष्टाऽसिद्धत्वेपि यादेशदृष्टासिद्धत्वनपरि-भाषाप्रवृत्तेर्दुर्वारत्वाच्चषाष्ठवहिरङ्गपरिभाषायां वहिरंगस्तु तस्य-पूर्वत्रासिद्धत्वेप्यन्तरङ्गत्वेतस्याश्रयात्सिद्धत्वेन पयोडादौ व-हिरङ्गासिद्धत्वस्यैवयं सन्निपातविघाकं पश्यसितं निमितम्मा-भूयाइति तदर्थादिति बोध्यम् । वस्तुतइति । अन्त-रंगत्वस्यससंवन्धिकत्वेन तज्ज्ञानायवहिरंगत्वज्ञानस्यावश्य-कत्वेपि सन्निपातलक्षणत्वग्रहस्य तद्विघातकत्वग्रहप्रयोज्य-

त्वेन हतञ्ज्ञानं नहेतुरिति भावः । ननु पूर्वत्रैत्वस्यैवास्या-
अप्यन्तरंगत्वृष्टयावहिरङ्गं नेत्येवार्थइत्यत आह । किञ्चे-
ति । स्थानिवत्त्वेति । आनुमानिकेनसंनिपातलाभ इति
भावः । श्रौतेनसंबुद्धित्वन्तुनालविधित्वात् । ननु दीर्घाद्यु-
त्तरमतिदेशप्रवृत्त्यातदभावेपि प्रवृत्तेः प्राक् परिभाषयाप्रतिव-
ध्येतेति नासङ्गतिरिति चेन्न । प्रवृत्तेःप्राग् विघातकत्वासंभावे-
नयत्नतद्विघातकत्वंभावीत्यर्थावश्यकत्वेनातिदेशेनतद्बु श्रौतद्वि-
घातकत्वाभावात् । अशास्त्रीयेति । तास्यनिट्त्ववदिति भावः ।
तेनादेशप्रयुक्तवारणायतदप्रवृत्तिर्बोध्या । तत्रासिद्धेति । अ-
शास्त्रीयेविघातकत्वंभावीत्यादि व्यवहारइत्यर्थः । स्पष्टंचेदमौ-
दुत्सूत्रेप्रदीपे । बहुवचने । रामाभ्यामिति । सुपिचेति तुरामा-
येत्यत्रसावकाशंपयुदासेनाक्कृदित्यस्याप्राप्तेः । आद्यपक्षेऽपवाद
त्वेपि रामेभ्यइत्यसिद्धेश्चरामइति तुनप्रत्युदाहृतंरूपत्रयेनै-
वेष्टसिद्धेः पूर्वोक्तासिद्धत्वबाधस्तुहलोनन्तराइत्यादि निर्देशा-
द्बोध्यः । नुमापत्तेरिति । पञ्चमोसमासेनस्थानिवत्त्वेनोभयोर्नि-
त्ययोःपरत्वान्नुमापत्तेरिति भावः । अन्तरंगत्वाद्गुणइति
तुनवाच्यम् । इनितस्याऽनित्यत्वेनाप्रवृत्तेरन्यथेकोऽसिद्धत्वात्
गुणोनस्यादिति यद्वावार्णादांगस्यबलीयस्त्वात् साचागमविष-
येपि । अतएवसतुक्कनिर्देशेनतदनित्यत्वज्ञापनंसंगच्छतउभयो-
रादेशत्वएवेति ह्रस्वइत्यत्रवक्ष्यमाणपक्षेतुरमइत्यादौ ह्रस्वस्य-
गुणइति गुणापत्तिर्बोध्योभयोरादेशत्वात् । इट्पक्षेरामेभ्यइ-
त्यत्रहलिलोपानापत्तिर्बोध्या । तच्छिवइत्यत्रमनोरमाग्रन्थवि-
रोधंपरिहरति । इतिशेषइति । यत्रतुजश्त्वचर्त्वइति द्वन्द्वे नैव-

शेषसम्भवस्तत्रतु जश्तु अचर्त्वइति छिन्दन्ति यत्रपूर्वं जश्त्वप्रवृत्तौपरिनिष्ठितेरूपेविशेषःतत्रजश्त्वम् प्राक् प्रवर्ततेनत्वाध्यबाधकभावः तेनरत्नमुडादौ नदोषोऽन्यथाऽऽन्तरतम्याच्चर्त्वेनषस्य षएवस्यात् । जक्षित्यादयः षड्वौषडित्यादिनिर्देशाश्चेहलिङ्गम् । एतेनणत्वंद्वित्वञ्चतुर्णामित्यत्रत्यस्वग्रन्थविरोधश्चर्त्वस्य जश्त्वापवादत्वादित्यपास्तम् । तथाहि पूर्वत्रासिद्धमद्वित्वङ्त्यस्यवर्णद्वित्वेप्रवृत्तौ चर्त्वस्यासिद्धत्वात् गस्यैवद्वित्वेऽन्त्यस्य चर्त्वेपूर्वत्रगश्रवणापत्तिरिति हितत्रोक्तन्तत्रचपूर्वंजश्त्वेगकयोः श्रुतिरपवादविषयतयातदभावेकुत्वनिष्पन्नकस्य द्वित्वेकद्वयश्रुतिरितिपरिनिष्ठितेवर्त्ततेविशेषः वर्णद्वयतत्प्रवृत्तौ तुपरेषामसिद्धत्वात् । कुत्वेजश्त्वापवादत्वात् । द्वित्वापेक्षयापरत्वाच्चर्त्वेद्वित्वमिति प्रक्रिया । एवङ्गकारेजशिपरइति तदुत्तरशङ्काग्रन्थोपि नविरुध्यतेद्वित्वेकृतेपीत्यर्थाभावएकगश्रवणरूपविशेषस्यसत्त्वात् । सिद्धान्तेतु पूर्वमेवचर्त्वमिति प्रक्रियाबोध्यात्रिपाद्यान्तःकौण्डिन्यन्यायस्तु प्रवर्तयिष्यतेऽहन्सूत्रइति तत्रैवसमर्थयिष्यते त्रिपाद्यान्तन्न्यायप्रवृत्तौयत्भाष्यंविरुध्यते तदनित्यत्वेनसमाधेयम् । परन्त्विदं *मनोरमाकाराशयवर्णनमात्रं वस्तुतः षडितिनिर्देशेनाबाधकत्वज्ञापनमेव लघ्वितिति दिक् । जश्त्वापवादत्वादिति ननु प्राचीनमतेऽभेदविवक्षाया अपि सत्वेनपदत्वाभावेचर्त्वंसार्थकमिति वाच्यमिति चेन्न । यरोनुनेतिवापदान्तस्येति पूर्वोत्तरसाहचर्येणैतत्प्रकरणस्यपदानवयवेऽप्रवृत्तेः । न्यायादिति । फला-

* तच्छित्वएतत्प्रयोगस्येति ।

भावेपिप्रवृत्तौ बाधकाभावादिति भावः । पूर्वग्रन्थेऽस्यफलविशेषाभावेप्रवृत्तौ नबाधकमित्येवतात्पर्यम् । न तु तत्रप्रवृत्तौबाधकमितीति नतद्विरोधः । मूलेप्रयत्नभेदादिति ननु प्रयत्नभेदेपितएवस्यात् नतुसः । सादृश्यस्यभेदघटितत्वेन सकारस्यसदृशतमत्वाभावादत आह । मूलेऽतएवेति । आन्तरतम्यपरीक्षायामभेदघटितस्यापि सादृश्यस्यग्रहणादेवेत्यर्थः । एतेनपाक्षिकसकारनिवृत्त्यर्थन्तद्विधानमित्यपास्तम् । नचैवमपिवत्स्यतिघत्स्यतीत्यत्रपक्षेद्वितीयादेशार्थन्तद्विधानमिति वाच्यम् । बहिरङ्गपरिभाषयासन्निपातपरिभाषयाचासिद्धान्तेपि तस्याप्रवृत्तेः यद्वासःसिअन्तरतमआदेशइत्येवतकारेलब्धेतकारानुवृत्त्यादेशविधानं ज्ञापकमुक्तार्थस्येत्यर्थः । नतुसर्वथासूत्रंनकर्तव्यमिति । अव्ययमित्यादिसमासविधानाज्ज्ञापकादिति यथावक्ष्यते तथाऽत्रैवेति नचात्रकल्पनेनानुवृत्तिर्द्वितीयादेशाभावायेति शंक्यऽन्त्वत्वेनैवसिद्धे सूत्रस्यैव वैयर्थ्यापत्तेः तदेतदभिसन्धायाह । चत्वेनसिद्धाविति । यद्वातादेशारम्भेहेतुत्रयम् । सर्वथातकाराप्राप्तिः पाक्षिकसकारनिवृत्तिः द्वितीयादेशप्रवृत्तिश्चेति । तत्राद्यस्यन्याय्यत्वेनोक्तम् । अतएवेति यद्वाएवकारोप्यर्थइत्याहुः । ह्रस्वनद्यापः । बहुवचनमेवेति । तद्धितस्यसानुबन्धकत्वात् कास्प्रत्ययादिति विहितस्यापि नफलाभावात् । तथाह्यदन्तेनित्यत्वादल्लोप इगन्तेपरत्वान्नित्यत्वाच्चगुणःणिजन्तेनित्यत्वादयादेशइति ह्रस्वांशेनफलंनचान्तेपिपरत्वात् गुणेवर्णसंज्ञापक्षेऽप्राप्तिः तदन्तसंज्ञापक्षेपि सकृद्गताविति न्यायेननेतिनतदाबन्तादाचारक्विपो-

ऽनभिधानमेव तस्यात्रग्रहणेपि नदोषइति प्रक्रान्तसूत्रभाष्या दिस्पष्टमुद्योतइति भावः । दीर्घेष्विति । दीर्घान्तेष्वित्यर्थः । ननुबहुश्रेयसीत्यत्रपुंस्यपि नदीत्वस्यसत्वात् खट्वायाअःखट्वा इत्यादौ पुंस्यप्याबन्तस्यसत्वात् कथं स्त्रीत्वलाभइति चेत्तत्रापि व्यभिचारणदीर्घान्तत्वलाभोनस्यादित्यत आह । नदीत्वाप्त्व- योर्ह्रस्वेपीति । तदन्तसंज्ञापक्षउभयत्रापि तदन्तपरताबोध्या । नामि । चर्मणामिति । ब्राह्मणभिस्सेति पूर्वोक्तोदाहरणपरभा- ष्यरीत्येदंप्रयोजनम् । अर्थवत्परिभाषयातद्वारणेतुनामधातोः क्विपिदेवदत्तनामित्यत्रफलं बोध्यम् । टोरनामिति निर्देशेनप्र- त्ययस्यैवग्रहणेनतदादेरेवदीर्घइति नशंक्यंनआम् अनाम्इत्ये- वमपि निर्देशोपपत्तेः । षडित्यत्रेति । नृनद्यापइति तूक्तिंभा- ष्यस्योदासीनत्वात् मण्डूकानुवृत्तेर्निष्फलत्वात् । संख्येयवि- शेष्येति । मुख्यविशेष्येत्यर्थः । तत्वञ्चस्वार्थनिष्ठविशेष्यता- निरूपकविषयतानाश्रयत्वं यस्यसंख्यावाचकत्वंसस्वपदार्थःना- तःप्रियपञ्चानइत्यादौ दोषः ।नन्वेवंत्रयोदण्डिनइवत्रयःपूषा- णइवत्रयः पञ्चइवत्रिदण्डिनःत्रिपूषाणःत्रिपञ्चानइत्यादावु- पमितसमासेऽतिव्याप्तिः ममतुषडर्थगतसंख्याभिधायित्वाभा- वाज्जश्शसोर्नसेति चेन्न । परमकतरवदिष्टत्वात् । अन्यथा- कतितक्षाणइवकतितक्षाणइत्यादौ तत्रापिसादुर्वारैवस्यात् षड् भ्यइत्यस्याप्रवृत्त्याएकत्रषष्ठ्यर्थेपञ्चमीस्वीकारेणषड्भ्यः परयोः षडर्थगतसंख्याभिधायिनोरित्यर्थः । एवञ्चेद्द्वित्राः पञ्च- शकुनयइत्यत्रापि ममनसेति चेन्न । कतिपञ्चेवेति कतिप- ञ्चानइत्यादौ तददाढ्यादुभयत्रापि षट्संज्ञकःशब्द×प्र-

स्यासत्त्याएकएवेति नैवंरीत्यातत्परिहारस्यमयापि कर्तुंशक्यत्वात् । तथाहि लोकेसंख्यावाचकत्वेन प्रसिद्धशब्दप्रकारकसंख्येयमुख्यविशेष्यकप्रतीति जनकप्रत्यासत्याप्रकारभूतशब्दावयवनकारान्तेति सूत्रार्थएवञ्चदशपञ्चेवदशपञ्चानइत्यादावपिनसेति दिक् । विहितविशेषणमिति । परमषडित्यादेरनभिधानमेवेतिनस्वरूपमिति सूत्रस्थभाष्यविरोधः तत्रहि षान्तस्यषट्संज्ञाविधानं शब्दशास्त्रीयसंज्ञायां शब्दस्वरूपाग्रहणज्ञापकमित्युक्तं विहितविशेषणेतुतदभिधानेफलभेदापस्यातदसङ्गतिः स्यादिति स्पष्टम् । अप्राप्तेरिति । इदञ्चान्यरीत्यास्व*मतेतुतत्रापिपरिभाषाप्रवृत्तिः स्फुटैवेति बोध्यम् । नोक्तमिति दोषाभावात् । शास्त्रेऽयमेवनुट्कर्तव्यः अन्यत्रनिटोनटोवेति भावः । लिङ्गादिति । प्रकृतसूत्रेभाष्येस्पष्टमिदम् । एतेनात्रक्षाणणिच्चिटिलोपेसार्थक्यमित्यपास्तम् । तदनभिधानात् । अनुवृत्तावेवेति । अन्यथामुष्येत्यादावपिन स्यादिति भावः । सर्वादीति । तद्गुणत्वेबीजमाह । अवयवेति । एवञ्चान्यपदार्थस्यप्रायः संयोगसमवायान्यतरसम्बन्धित्वात्तत्त्वमिति भावः । न्यायसिद्धत्वात्सर्वेषामिति निर्देशानुधावनं नक्रतन्तेनैतत्साध्यं सर्वशब्दघटितत्वम् । अन्यपदार्थस्योभयसाधारणत्वात् । निपातनान्नेति । लोकेपीति शेषः । ऋष्यसम्मतज्ञाप्यार्थकस्यापि ओर्गुणइत्यादेरनादरात् । तत्सम्मतिमाह । प्रयोजनेति । एकदेश्युक्तिरिति यस्तुवि-

---

* एकदेशविकृतन्यायेन सन्निपातविघाताभावेपि वास्तविकन्तमादायपरिभाषाप्रवृत्तेर्दुर्वारत्वादिति भावः ।

हितविशेषणाश्रयणसामर्थ्यात्सर्वनामपदेयोगरूढ्यङ्गीकारेणस र्वार्थवाचकसर्वनामसंज्ञकसर्वादेर्विहितस्यङेःस्मै इत्यतिसर्वा- दौ नदोषइति तस्यापि सिद्धान्त्युक्तित्वसमर्थयांचक्रे सएवंव- क्तव्यःमासपूर्वायेत्यादिव्यावृत्त्यासार्थकस्यतस्यकसामर्थ्यमिति महासञ्ज्ञयैवंतत्सिद्धौ विहितपदाध्याहारोविफलइत्यरुच्यैवा- ग्रिमभाष्यस्यत्वयापि व्याख्येयत्वात् मूलतोधिकंकिंपराक्रान्त- न्त्वयेतिच। संख्याकारकाभ्यांपूर्णेति । संख्याकारकाभ्यांपूर्णो- योर्थः तस्येत्यर्थः । गमकत्वात्समासः । अन्वयेनेति । अयंसु- बन्तात्तदुत्पत्तौहेतुरिदंचाकज्विधौविभाषासुपइत्यतः सुपइत्य- स्यसम्बन्धेपि वाक्यभेदेनयुष्मदस्मत्प्रकृतिकसुबंतस्यटेःप्रागक- ज्विधायकमित्याशयेन यदित्वकच्सूत्रीयशेखरोक्तरीत्यावाक्य- द्वयेपि सम्बन्धःसुबन्तावयवसर्वनाम्नष्टेः प्रागकजितिवाक्यार्थ स्तदास्पष्टैवसुबन्तात्तदुत्पत्तिः। अत्रत्यन्तत्वमुभयशब्दे स्फुटोभ- विष्यति । सुबन्तादिति । ल्यप्लोपेपञ्चमी । सुबन्तन्सम्पाद्ये- त्यर्थः । उत्पत्तेरित्यस्याग्रे कर्तव्यत्वादिति शेषः । यथाश्रुत- न्तुनयुक्तम् । उक्तभाष्यात् । सुबुत्पत्त्यनन्तरन्तदुत्पत्तिलाभेपि देशविशेषस्यालाभात् । घकालेदिनातल्लाभेपि अकच्चिकृतेत- द्वाभात् । एवमग्रे पि सर्वनामप्रकृतिकसुबन्तादिति व्याख्येय- मिति नतदसंगतिरपि । प्रागकजित्यस्याग्रे कर्तव्यइति शेषः । इत्यर्थात्तदन्तेति । नन्वेवमपि सर्वकइत्यादौ सर्वार्थकुत्साव- बोधयिषायांकिमादेरकज्दुर्वारोऽतस्तद्वारणार्थंसर्वनाम्नष्टेः प्रा- गकच्प्रकृत्यर्थकुत्सायामिति प्रत्यासत्तिरावश्यकेति तयैवतद- न्तसञ्ज्ञाभावेतदसिध्युपपत्तावयंप्रयासोविफलइति चेन्न । भ-

वच्छब्दात् सुप्यनुत्पन्ने ऽत्यन्तस्वार्थिकेकनिभवदथकुत्साविवक्षायामकज्नेत्यस्यफलस्यवक्तुंशक्यत्वेनसुवचत्वात् । असिद्धिरिति । समासार्थकुत्साविवक्षायामसिद्धिरिति भावः । नन्वेवंभवकच्छब्देनसमासेसमुदायकुत्साबोधकोऽपरोऽकच्स्यादिष्टापत्तेः । एतेनान्तर्वर्तिसुपांसुबन्तत्वमादायतत्सिद्धिरित्यपास्तम् । एवमेवेति । सर्वनामप्रकृतिकसप्तमीपञ्चम्यन्तात् त्रतसिलावितितदसिद्धिरिति भावः । एवमभवकद्भ्यामित्यादौ नञ्समासेपूर्वपदप्रकृतिस्वरेऽकच्यन्तोदात्तत्वंसिध्यति । अन्यथावयवादुत्पत्त्यास्वरद्वयं श्रूयेतेति बोध्यम् । चरितार्थमिति । द्वन्द्वे चेति निषेधस्तुविशिष्टस्यस्वांगशिटामिति प्रकृतिस्वराकज्निषेधकत्वेनकृतार्थः स्यादिति भावः । इदमुपलक्षणंपरमसर्वइति तदन्तसंज्ञोदाहारणपरभाष्यस्य । वस्तुतस्त्वङ्गसंज्ञकाददन्तसर्वनाम्नःपरस्येति सर्वत्रार्थइति नकापिविहितविशेषणम् । अतएवसर्वनाम्नः परस्यामइति तस्मिन्निति सूत्रेभाष्यउक्तमित्याहुः । परेत्विति । अतएवकाणेति । यद्यपिनानुबन्धकृतमनेकाल्त्वमित्यनानुबन्धत्वयोग्यतानिवेशफलन्न तथापि वक्ष्यमाणभाष्येणेत्सञ्ज्ञायोग्यत्वमेवानु*बन्धत्वमिहशास्त्रइति बोध्यते नतुलक्षणात्तत्फलमुक्तमिति नदोषः । अनुबन्धेति । तत्वज्ञानेत्यर्थः । एवमग्रे पि बोध्यम् । विकल्पइति । ननु दधतोत्यत्रान्तादेशइवात्रापि प्राग्विकल्पोनस्यादिति चेन्न । अजणादिविषयेसूत्रीयासारूप्यमादायप्राप्तविकल्पनिवृत्त्यासार्थक्येनापवादोपोतिन्यायविषयतयादधतोत्यतो-

* अनेकत्रपरिभाषायां योग्यतानिवेशगौरवादिति भावः ।

त्रवैषम्यात् । अत्रत्यन्तत्वंपरिभाषेन्दुशेखरविवृत्तिसंग्रहेस्पष्टम् । ध्वनितमिति । तत्रहिडाकारस्याशित्वंकार्यमित्याशंक्यानित्यत्वात्प्रश्लिष्टत्वाद्वाइत्युक्तम् । अन्त्येशितउदाहरणेशिश्यावुक्त्वाऽनपूर्व्यादनेकाल्त्वात् सिद्धमित्याशंक्यनानुबन्धेति ज्ञापनेनसार्थक्यमुक्तम् । वस्तुतस्तु न्यायसिद्धत्वेनानित्यत्वादित्येवसिद्धांत्युक्तिः । न्यायसिद्धैतदभाष्यविरोधेनप्रश्लेषप्रयुक्तगौरवेणचतत्तादृशतद्ग्रहणेफलाभावाच्चतद्भाष्यद्वयमेकदेश्युक्तिः । अतएव परस्मैपदानामिति सूत्रभाष्येऽनित्यत्वादेवणलः सर्वादेशत्वमसाधितं नतुप्रश्लेषादपि परिभाषाज्ञापनन्तु पुम्रैद्युभ्यइति निर्देशेनापिसिद्धञ्शित् ग्रहणञ्चनकार्यमिति तदाशायमाहुः । विभक्तित्वयोग्यइति । यद्यपिदधतोत्यादिवदिदमपिलक्षणांविनैवसिध्यति तथापि स्थानेन्तरतमइति सूत्रोक्तभुक्तवन्तमिति न्यायविरोधादनर्थकत्वमुक्तम् । तद्बोत्येदमिति नोक्तदोषः । नित्यशब्दोऽत्रधारणार्थइत्याह । एवेति । *अनेनसजातीयवचनस्यव्यवच्छेदादान्तारिकं भवत्येवार्थपरत्वएवायंनियमइति शब्दपरत्वउभादित्यादि भवत्येव । नन्च सुबन्तेति । अयंभावः त्वयकामयकेत्यादिसिद्धये विभाषासुपइति सूत्रादकज्विधौसुपइति सम्बध्यते तथाचायमर्थोयुष्यदस्मत्प्रकृत्तिकौकारसकारभकारादिभिन्नसुबन्तस्यटेःप्रागकजित्येकः । सुबन्तावयवसर्वनाम्नष्टेः प्रागकजित्यपरः एवंचसुबन्तस्यप्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वा-

* ननुद्विर्वचनमन्तेयस्येति विग्रहेणद्विर्वचनातिरिक्तमात्रस्योभयशब्दे समीप इतित्वनिषेधेनोभतीत्यादिनस्यादत आह । अनेनेति ।

त् प्रकृतित्वंस्पष्टमेवेति । एतेनसुबन्तादकृच्युभाभ्यकामिति रूपेणविशेषस्यसत्वेनस्वरपर्यन्तानुधावनंव्यर्थमोकारेत्यादितु-युष्मदस्मद्विषयकमित्यपास्तम् । केतुप्रकृतेर्रिति । भ्यामादि-प्रकृतेरित्यर्थः । सुबन्तात्परइत्यस्यसुबन्तंसंपाद्ययतः कुतश्चित्-परइत्यर्थः । यथाश्रुतन्तुनयुक्तम् । न्यायासाध्यत्वादकच्चि-वासंभवात् । प्रातिपदिकस्यैवेति । अकच्सूत्रीयशेषरस्तुस्वरू-पकथनपरः । मतु द्वितीयवाक्येतत्संबन्धपरइति नतद्विरोधः । अतएवकाकचोःकोविशेषइति भाष्यंसंगच्छते । यत्त्वकज्वि-धावुद्योतउक्तम् । उभयंप्रकृतमिति प्रतीकमुपादायप्रातिप-दिकाधिकारात्सुबन्तसामर्थ्यादिति तच्चिंत्यम् । इतिविशेष-इति । यत्तुप्रकृतसूत्रउद्योतएवमज्ञातोभयोर्घटइत्यर्थेऽकच्य-यच्युभकयघटइति रूपंकेयच्युभयकघटइति कस्यद्विवचन-त्वउभयकघटइति वास्यादिति रूपविशेषइत्युक्तंतत्तुवृत्तौक्त-तायामयजिति प्राचीनवासनयावृत्तिविषयेपूर्वमेवसइति सि-द्धान्तेतु सर्वथोभयकघटइत्येनेकमेवभवितव्यमिति विशेषा-भावः स्पष्टएव । अतएवतद्विशेषानुक्तिरत्रग्रन्थआदेशपक्षे त-यप्स्थानिकत्वेनायच्चः तद्विकल्पेनैववाक्यसिद्धौफलाभावेन महाविभाषायाअसंबन्धःसिध्यति प्रत्ययान्तरत्वपक्षेतदसंबं-धार्थंतत्स्यादत आह । भाष्यकृतेति । व्याख्यानंसंबन्धावश्य-कत्वेहेतुः । अन्यथाफलभेदेपक्षभेदासङ्गतिःस्यादिति भावः । अयोग्यंसदिति । द्वितीयसूत्रस्थवेत्यस्यास्वरितत्वादसंबंधमभि-प्रैति । ननुकारकमनोरमायांवस्तुतस्त्वित्यादिनावृत्तौक्ततायां-मयजित्यर्थलाभेनोभयत उभयत्रेत्यादावपिवेति सङ्गतिः ।

दृष्टान्तस्यन । अन्योन्याश्रयापत्त्यात्वलादेरेवानुत्पादप्रसङ्गात्
सत्ययच्त्रिलादिवृत्तिःसत्याऽच्त्रलादिवृत्तावयजितीत्यत आह ।
अयंचेति । कारकमनोरमाग्रन्थस्तुप्राचामनुसारीति नत*द्विरोध-
इति भावः । ननूभशब्दस्यायंचिकृतेसर्वत्रैव तद्विषयत्वाभावसं-
भावनायद्ययच्वंविनासम्भावनेत्युच्यतेतदोभयतउभयत्रेत्यादा-
वपि सनस्यादत आह । उभयशब्दस्येति । द्विवचनेति । त-
चोभशब्दप्रकृतिकमेवेतिनाहग्रः । तेनपरमोभावुभोभावि-
त्यादौ समासप्रकृतिकेपि तत्रनायच्प्रत्याख्यानेद्विवचनशब्द-
ग्रहणेन तदर्थस्यसम्भवेनारम्भेपि तथैवोचितत्वात् । उभ-
शब्दादुत्पन्नंद्विवचनमिति मनोरमाग्रन्थस्यतु तदन्तादित्य-
र्थइति बोध्यम् । विषयत्वंचपरत्वम् । नन्वेवमुभावित्यत्र-
प्रक्रियायामेकादेशातः प्राक् तस्यतत्परत्वसम्भावनायामपि प-
रिनिष्ठितेतदभावस्यापि सम्भावनयाऽतिव्याप्तिर्दुर्वारेति चेन्न।
तद्विषयत्वसम्भावनाभावस्यविवक्षितत्वात् । विषयत्वविषयि-
ण्यभावप्रतियोगिभूतासम्भावनेत्यर्थात् । लुकाचानुत्पत्तिरे-
वेति नत+त्रापिसम्भावनेति बोध्यम् । यद्वोभौसाभ्यस्येति
निर्देशेनस्वोत्तरत्वस्वावयवत्वान्यतरसम्बन्धेन तद्विशिष्टत्वमेव
तद्विषयत्वंपरिनिष्ठितेविवक्षितमिति यथाश्रुतमपि साधु ।
अलुकीति । यद्यपि द्विवचनबहुवचनयोरलुक्नेत्यलुगुत्तरप-
दइति सूत्रभाष्याल्लभ्यते तथापि सम्भवाभिप्रायेणेदमुक्त-
मिति बोध्यम् । निर्देशेनेति । उभशब्दप्रकृतिकसुबन्ता-

---

* कप्रत्ययेनेष्टसिद्धिवादिमतउभशब्दस्यगणेपाठाभावेनायच्विनासर्वनाम-
प्रकृतिकसप्तम्यन्तत्वाभावादिति भावः । † त्वलादिष्वपीत्यर्थः ।

भावेन स्वार्थिकायजुत्तरुच्चारिताध्याभावेन तक्कौण्डिन्यन्या याप्रवृत्त्यासर्वथानिरवकाशत्वेनैवावयवार्थकोऽयच्तद्बाधकःस्या दिति तत्रकृतेक्रोष्ट्रीत्यत्रङाब्वत्स्वार्थिकोऽयच्दुर्वारइति निर्दे- श*नैववारितइति बोध्यम्। अनभिधानमेवेति । तत्प्रत्याख्या- नेनकलैस्यायेदमावद्यकमिति भावः । वस्तुतइदं प्रत्याख्या- नमिष्टापत्तिकृत्वैवातएवोभोभाविति वक्ष्यमाणग्रन्थसङ्गतिरि ति बोध्यम् । अयच्यकच्तुनेति । अयम्भावः । सुबुत्पत्तेः पू- र्वमयजङ्गीकारेतत्रकृतेऽयजन्तस्यगणेपाठेन सर्वनामत्वादकच्वि- तद्विषयत्वमेवस्यादिति तदभावसम्भावनाभावेन पूर्वमप्रवृत्तौ- कप्रत्ययेपोष्टसिध्योभशब्दपाठोव्यर्थः वृत्त्यनन्तरमयजङ्गीकारे- तुनायं दोषइति । उपजीव्यत्वेनेति । अयंभावः । उक्तरीत्यो- भयशब्दस्य तद्विषयत्वाभावसम्भावनाभावेप्युभशब्दस्यकप्र- त्ययविवक्षायास्तदभावसम्भावनासत्वेनायच्युपजीव्यकापवा- दाकचोऽप्रवृत्तिरिति । नन्वेवमुभयशब्दस्यैव तदभावसम्भा- वनाऽयच्प्रयोजिकास्तूभशब्दस्यतु सामास्तुफलाभावात्। एवं- चपाठोनकार्यइति लाघवं नह्यत्रापिकप्रत्ययस्योपजीव्यत्वमिति वाच्यम् । एवमपि पूर्वमयज्माप्रवर्तताङ्कप्रत्ययोत्तरन्तु सप्रव- र्तेततदातदभावसम्भावनासत्वादित्याहुः । किमर्थमिति । एवं सतिप्रत्ययविधौतदन्तविधिनिषेधेनपरमोभकावित्याद्यसि- द्धिस्तुन तन्निषेधेप्यव्ययोभसर्वनाम्नांटेः प्रागकच्तदर्थगतकु- त्सादावित्यर्थेनसमुदायार्थेतद्विवक्षायामवयवार्थेतदविवक्षाया- वक्तुमशक्यत्वेन परमगार्ग्यायणइत्यत्रोक्तरीत्येष्टसिद्धेरित्याश-

* न तु बाध्यबाधकभावेनेत्यर्थः ।

यात् परमभवकानित्यत्रोक्तन्तुमतान्तरमिति क्षोदिष्यते वि-
शिष्टस्यप्रकृतित्वाभावेऽनुभकावित्यादौ स्वरेतुनदोषः सतिशि-
ष्टत्वेन स्वघटितपदघटितत्वेनचनिघातप्रवृत्तेर्निष्प्रत्यूहत्वात् ।
एवंहिगणेऽन्तोदात्तनिपातनंन*कार्यमितिलाघवमिति भावः।
प्रत्याख्यानेनगणेऽन्तोदात्तनिपातनानुमानम्। अन्यथास्वरार्थ-
पाठस्यावश्यकत्वात् तदसङ्गतिः स्यात्। अतएवोपसर्जनेति।
इदञ्चत्वच्छन्दस्तान्तइति पक्षेफलंसुवचमिति वादिनांमतेन
स्वमतउपसर्जनेकुत्सादिविवक्षायाः कर्तुमशक्यत्वंस्पष्टमन्य-
त्रेति बोध्यम्। अनुवादकत्वमिति। बोधकत्वमित्यर्थः। अ-
तएवोभावित्यस्यसिद्धिरतएवोद्द्योतेबोधकपदोपादानमेव ।
अभावबोधकेति। नवेतिविभाषेत्युक्तेरिति भावः। एवञ्चा-
पवादविषयेऽन्तरङ्गोद्भावनमसङ्गतमिति भावः। इदञ्च-
प्राप्तिमभ्युपेत्यवस्तुतस्तत्प्राप्तिरेवनेत्याह। किञ्चेति। युगप-
त् प्राप्त्यभावादिति। उभयविषयकवाक्येजसिपरतःसर्वना-
मतावानभवति जसःकार्यंप्रतीति सूत्रार्थोऽत्रपक्षेजसःकार्य-
मिति वाचनिकंयद्वाजसःस्थानआदेशेकर्त्तव्येजसइकारेकर्त्तव्य-
इत्यर्थोवाजसुत्तरमेव तस्यकर्तव्यतेतिनयुगपत्प्राप्तिः प्रकल्प्य-
चेति न्यायप्रवृत्तिपक्षेनित्यसंज्ञायाः पूर्वमप्रवृत्तिरप्रवृत्तिपक्षे-
जसःपूर्वमेवनित्यसंज्ञाप्रवृत्तिरित्युभयइत्यस्यसिद्धिरिति भावः।
ननुप्रथमइत्यादिसिद्ध्यनुरोधाद् वाक्यान्तरेजस्विषयेपूर्वमेव-
सर्वनामतावाभवतिशीभावेकर्त्तव्यइत्यर्थआवश्यकः जसआदे-
शस्यविषयइत्यर्थोवोभयथापि शीभावविषयताजसः प्राक्प्रा-

* घृतादित्वकल्पनञ्चेत्यपि बोध्यम्।

ळीनैव सामर्थ्याद्गृह्यतइति युगपत्प्राप्तिर्नित्यविकल्पविध्योः सम्भवतीति चेत्तत्राप्यसम्भवएवेत्याह । जसीति । विषयसमेति । ननु मनुष्योयंप्रातरुत्थायेति दृष्टान्तेनपूर्वंयस्यनिमित्तसम्पत्तिः तस्यपूर्वंप्रवृत्तिरित्यर्थः सिध्यतितस्यापि परिभाषयाक्रोडीकारेनबाधकं तत्रासिद्धत्वंचनिमित्ताभावादप्राप्तिरूपमिति युगपत्प्राप्त्यभावेपि परिभाषासंचरत्येवेति चेत्तत्राह । स्थानिवदिति । निरवकाशेति । अयंभावः प्रकृतिभेदात्प्रत्ययोभिद्यतेस्थानिभेदादादेशोभिद्यतआदेशभेदात्स्थानिवद्भाववाक्यंभिद्यतेनल्विधिभेदाच्च । एवञ्चोभयशब्दावयवोऽयजादेशः सर्वनामत्वेऽनल्विधौकर्तव्येतयरूपस्थानिवदितिवाक्यंनिरवकाशमिति । एतेनोभयीत्यत्रङीप्सम्पादनेनद्वयेत्यादिसाधनेनचातिदेशप्रापितापिसावकाशेतिपरास्तम् । अन्त्यस्यानभिधानाच्चनेन निषेधानांबलीयस्त्वस्यसंग्रहः । ननु परिभाषाविरोधादतिदेशवाक्योपप्लवएवनेति चेत्तत्राह । प्रत्यक्षेति । निरवकाशत्वंचदिवःकर्मचेति सूत्रस्थमनोरमानुरोधेनतद्रीत्यापि ननु कार्यकालपक्षेजसुत्तरमेव नित्यसंज्ञायाअपि प्राप्तिरिति युगपत्प्राप्तिरस्त्येवेति चेत्तत्राह । सर्वनामेति । अतएवतयादेशइति तयबन्तत्वप्रयुक्तआदेशेकर्तव्यउभयशब्दावयवादेशस्यस्थानिवत्वप्रतिषेधोवक्तव्यइत्यर्थः । अतएववार्तिकमतउभयीति ङीपिकर्तव्येतत्प्रतिषेधोनशोभावएवतद्विधानात् । अतएवभाष्येयदिप्रत्ययान्तरम् । उभयीत्यत्रेकारोनप्राप्नोतीति शङ्कितम् । ननु यदिस्थानिवत्वप्रतिषेधइत्यादि । अनभिधानमेवेति । इदंद्वित्रिभ्यान्तयस्यायचश्चेति । तयग्रह-

णस्योकरणप्रौढ्यावस्तुतस्तूभशब्दप्रकृतिकएवायच्प्रत्ययान्त-रन्तत्रतयस्येत्यननुवृत्तेः द्वित्रिप्रकृतिकस्तुतयस्थानिकएवनतु-प्रत्ययान्तरमिति पाठकाएतन्मतश्रद्धालवोऽन्यैस्त्वत्रद्वयच्प्र-त्ययान्तरमिति भाष्यंयथाश्रुतंयुज्यते ऽसतिबाधकउद्देश्यता-वच्छेदेन विधेयान्वयस्यव्युत्पत्तिसिद्धत्वात् । त्वयातूभशब्द प्रकृतिकोऽयजिति व्याख्येयमिति तद्भङ्गःस्यात् । भाष्ये-तत्रचद्वितयइत्येवपाठइतिवदन्ति । इदञ्चनवेतिविभाषेत्या रम्भेप्रत्ययान्तरत्वेन समाधानमावश्यकमिति स्पष्टमेतत्प्रत्या-ख्यानेत्वन्तरङ्गप्रथमादिसाहचर्याद्विधिमुखेनैव प्रवृत्तिर्भविष्य तीति नित्यसंज्ञाप्रवृत्तिर्मूलोक्तरीत्यान्याय्यैवेति बोध्यम् । तद-न्तविधिद्वयेनेति । यद्यप्येकेनापि तदन्तविधिनाप्रयोजनला-भात्पाठः सार्थकस्तथापि सत्येकस्मिंस्तदन्तविधौ प्रत्यय-ग्रहणाभावेन संज्ञाविधावितिनिषेधाप्राप्त्याप्रयोजनंसर्वनामे-ति बोधिततदन्तविधिस्वीकारेबाधकाभावइति भावः । सन्नि-हितत्वादिति । दिग्देशवृत्तीनांप्रवृत्तिनिमित्तभेदादेवभाषित-पुंस्कत्वाभावोभाष्योक्तः सङ्गच्छते । चेनसदृशःस्थानेन्तरत-मइति यथा । प्रथमार्थएवेति । प्रथमानिर्देशसाध्यप्रयोजन-साधनतात्पर्यकएवेत्यर्थः । ननु चिकीर्षित इत्यध्याहारतात्प-र्यकोलघुनिप्रथमानिर्देशेकर्तव्येगुरुस्सप्तमी निर्देशस्त्वदृष्टार्थ-एवेति भावः । सौत्रत्वात्प्रथमार्थेसप्तमीत्येवं तुनव्याख्येयम् । गौरवात् मनोरमोक्तरीत्यासिद्धेफलाभावाच्च । अन्यथेति । चिकीर्षित इत्यध्याहारतात्पर्यकत्वइत्यर्थः व्यर्थः । स्यादिति । इदन्तुचिन्त्यम् पाणिनिनापिकिमर्थंप्रथमार्थेसप्तमीस्वीकृतेति

प्रश्नेनत्वाप्यूत्तरस्यदुर्लभत्वात् । अपरशब्दस्तुरूढः परापरयोस्तु-ल्यार्थत्वात् । नामपदस्वारस्येनेति । नम्यमानार्थकनामेति व्युत्पत्तेरिति भावः । विशेष्यभूतार्थकमिति यावत् । अभिव्य-क्तेति । इदञ्चान्येषांमतेन । क्वचित्त्वेतदपपाठःस्वमतेतु प्र-सिद्धार्थकाव्ययभूतनामपदस्वारस्येननामपदोपादानादेवोभय-लाभः । यद्वात्सर्वेषामिति बहुवचनेन प्राधान्यलाभः । अव्यय-नामपदेनप्रसिद्धलाभइति बोध्यम् । पदवन्तीति । इदंचान्यरी-त्यास्वीयमतेतुवृद्धिसूत्रोक्तरीत्यापदाभिन्नानीत्यर्थोबोध्यः । लो-कतः सिद्धेरिति । यत्रसंज्ञोपसर्जनीभूतउभयमपि लोकतः प्रसिद्धंतत्रासंभवान्नोभयविधिरिति बोध्यम् । नचासंभवेपि तत्सादृश्यविधिरन्यत्रैवास्त्वन्यतरविधानेपि सार्थक्येनान्य-त्रैवात्रसामर्थ्याभावादिति भावः । एवेनेति । उक्तरीत्यासर्वा-र्थवाचकस्य पदार्थैकदेशत्वेनेत्यर्थं 'वं'दोषांतरमप्याह । एक-पदोपेति । अव्युत्पन्नत्वादिति । 'नेति'इदंचसमासउद्देश्यविधेयभा-वेनान्वयोनेति वादिनांमतेस्पष्टमेव । तन्मतेतेनरूपेणान्वयेपृ-थगुपस्थितेस्तन्त्रत्वात् । स्वमतेतुसमासेपितथान्वयोभवत्येवेति कारकेवक्ष्यतेमंजूषायांचवक्ष्यतेतदाऽव्युत्पन्नत्वादित्यस्यौत्सर्गि-कत्वादित्यर्थोनिपुणतरैर्मत्सजातीयैरन्यैरपिवेदितव्यः । पदन्नो-मा । स्वानुरूपाइति । वर्णतोऽर्थतश्चेति बोध्यम् । नन्वस्यवैक-ल्पिकत्वाच्चरणादेरादेशत्वेपि नदोषइति चेन्न । पदाइ-त्यस्मोच्चरणत्वप्रकारकबोधोमाभूदिति चरणीऽस्त्रियामित्युक्ते-स्तस्यनपुंसकत्वेनतस्यादेशेशासिपन्दिपश्येति माभूदिति सुन्द-रास्नेत्यत्रमुखस्वाङ्गमिति स्वरोमाभूदितिच । अन्तरतम-

इति सप्तम्यन्तपाठस्यदूषितत्वेनैतल्लाभः कथमिति परंनिन्त्यम् । भाष्यइति । जातावेकवचनं । चेति । तदर्थकान्यतरस्याग्रहणेत्यर्थः । निश्निशयोरिति । शब्दपरत्वेनभिन्नार्थत्वान्नै*कशेषः । सुटोति । इदंचसुप्त्वेनसादृश्यमिति मतेहलन्तेति । वि†परीतन्तुनाऽऽस्यऽन्त्रप्रयत्नश्चेतिभाष्यप्रयोगात् । ननु छन्दसिसर्वविधीनांवैकल्पिकत्वेनादेशत्वेपि दोषभावाद्भाष्यमेकदेश्युक्तिरेवात आह । येचतद्धितइति । इत्युक्तमिति । तस्यस्वरितत्वेतु शिरस्यप्यस्यदुर्वारत्वेनतन्निवृत्तये क्रियमाणःस्थानिनिर्देशोविफलः स्यादिति भावः । ननु वाकेशेष्विति ज्ञापकान् नात्रसंबन्धइत्युक्तमेवेति चेन्न । तज्ज्ञापकानुसन्धानेहिप्रकृत्यंतरत्वेपि दोषाभावेनतदसंगतेस्तदव‡स्थत्वात् । प्रकृत्यंतरेति । तेचशसादौसाधवइत्यर्थः । अतोनपूर्वोक्तभाष्यादिप्रयोगविरोधः । अतएवेति । नत्वाआबितिप्रश्लेषादिति भावः । यत्तुवृत्तिकारमतेशिरसइति स्थानिनिर्देशोनकर्तव्यो भाष्यानुसारिमतेतुकर्तव्यइति पाठकक्रतंलाघवोपवर्णनन्तन्नशीर्षण्यइति वच्छिरस्यइत्यस्याप्यापत्तेः । अन्येतुपदादीनामादेशत्वमेवतस्यन्यायप्राप्तत्वात् । अतएवशीर्षन्छन्दसीतिसूत्रेभाष्येप्रकृत्यंतरंद्रष्टव्यम् । आदेशोमाविज्ञापीत्युक्तम् शिरसोग्रहणम्कर्तव्यंप्रकृत्यंतरंमाविज्ञापीतियेचतद्धितइति

* विरूपाणामित्यनेन । † सुटियद्यजन्तस्यप्रयोगस्तदानिशाशब्दस्यैवेत्याकारकः । ‡ एवञ्चज्ञापकमबुद्ध्वावतत्प्रवृत्तिर्वाच्येत्थञ्चज्ञापकबलेनानुवृत्तेर्वारयितुमशक्यत्वेन तस्यस्वरितत्वेप्रकृतेतदनुवृत्तेर्दुर्वारतया शिरसइति वाकेशइति च वार्तिकद्वयम्विफलमेवस्यादिति भावः ।

सूत्रस्थंभाष्यंत्वर्थाधिकारप्राप्तातिप्रसङ्गभङ्गायेति नास्माकंप्र-
तिकूलंवाकेशेष्वित्यतोवेतिसंवध्यते तेनहृदयस्येत्यादेर्नास-
ङ्गतिः । वार्तिकस्थपदस्याप्यनुवृत्तिःसूत्रेकदृष्टेतिनेद् वैया-
करणाख्यायांचतुर्थ्याइणःषइत्यनयोःपश्य अतएवशीर्षन्छन्द-
सीति सूत्रइवपद्दन्नितिसूत्रेप्रकृत्यन्तरंद्रष्टव्यमितिनोक्तम् । ते-
नह्यत्रसूत्रआदेशत्वप्रकृत्यंतरत्वयोःफलाविशेषोध्वनितःविक-
ल्पासंवन्धेतुविशेषस्य स्पष्टतयातदसङ्गतिःस्पष्टैवेत्याहुः । आहु-
रिति । स्थानेन्तरतमइति पाठदूषणावसरएतत्फलान्यथासि-
द्धाकरणात् प्रकृत्यंतरत्वमेषां ध्वनितंभाष्यइत्यपिवोध्यम् ।
सुडनपुंसकस्य । व्याख्यानादौटइति । आगमस्तुन सर्वना-
मस्थानेचासंवुद्धावितिपर्युदासात् फलाभावाच्चटाटकारेणप्र-
त्याहारेशसोप्यन्तर्भावात् । शिसर्वनामस्थानइति नियमाश्र-
यणेनेतरेषां क्लीवेसंज्ञाविरहेसिद्धअनपुंसकस्येति व्यर्थमेवस्या-
दनुवन्धवतश्चेत् शेरेवेतिनियमस्तुनराजासेमनुष्ययुवानइति
निर्देशादनुवन्धवतोऽजरूपस्यचेत् शेरेवेति तेनराजानौपश्येति
औटिनस्यादितिचेत् । औटिटकारोच्चारणसामर्थ्यात् तेन
प्रत्याहारइत्यवेहि । सुटसर्वनामस्थानमशोरिति तुनसूत्रितं-
ज्ञानमित्यादौ सन्निपातपरिभाषयानुम् वारणसंभवेप्यजरसं-
पश्येत्यादौ दीक्षितमतेनझलन्तलक्षणनुमापत्तेः सर्वइत्यादौ
यस्येति लोपस्तुनऔङःश्यामित्यत्रऔङित्यस्याकरणात् तत्प्र-
त्याख्या*नेतदलाभाच्च । स्वादिषु । प्रथमैकेति । अतएवसर्वना-
मस्थानेति चरितार्थम् । व्याख्यानादिति । सुपांग्रहइष्टेसुप्सु-

* यस्येतिसूत्रेणनदीसंज्ञकाकारइत्यर्थं स्वीकृत्येतिशेषः ।

इत्येवंवदेत् । अधिकग्रहेविनिगमनाविरहात् कबतानामिति भावः । कपःसंग्रहायाह । तदन्तेष्विति । यन्निभं । सौत्रत्वान्नटजिति । समासांतानित्यतायाः क्लृप्तत्वादितरयोगद्वन्द्वएकवचनमितिनोक्तम् । तेनेति । पूर्वसूत्रेराजानावित्यत्रनलोपस्तुनापादितःभसंज्ञयावाधात् । भवतीति । तेनदतोदतेत्यादौ जस्त्वंनेति भावः । आकडारादेकासंज्ञा । संज्ञाग्रहणंस्पष्टार्थंप्रकरणादेवतल्लाभादिति स्पष्टमत्रैवभाष्ये । व्याप्त्यर्थकेति । तेनचार्थेद्वन्द्वइत्यस्यसंग्रहःतेनकर्मधारयसंज्ञाविषयेनद्वन्द्वसंज्ञा । युक्तमिति । तदुत्तरमस्यानुपयोगादिति भावः । पदगौरवेपि मात्रालाघवंप्रतिपत्तिलाघवंचात्रपक्षइत्याशयः । इदमुपलक्षणमाद्यन्ताद्यादित्यस्य तेनाभिव्याप्त्यर्थकत्वंसंभाव्येत सिद्धांतेतुतथात्वेपि नक्षतिरित्यपास्तम् । वस्तुतोऽवधिनिर्देशोऽफलउपसर्जनंपूर्वमिति प्रकरणेविच्छेदेनाद्ये ऽसंवन्धसंभावात् । निरवकाशत्वेति । एकस्याइति भावः । नन्वेकेत्युक्तेःपरैवकुतोऽत आह । विरोधाभावेनेति । पर्यायापत्तिरिति । पर्यायोहिक्रमप्राप्तस्यानतिक्रमःतत्कार्ययोर्मध्येयत् क्रमात् प्राप्तं परंतदनतिक्रमस्यापत्तिरित्यर्थः । सिद्धांतेतुसंज्ञयोर्यापरात्प्रयुक्तं कार्यम्पूर्वमपि प्रवर्ततइदानीं तुकार्यगतपरत्वंनियामकं स्यादिति भावः । एतेनैकमेवकार्यंस्यादिति चिन्त्यमेतदित्यपास्तम् । नलोपस्यापत्तिरिति । सर्वथानिरवकाशत्वादल्लोपेजातइति भावः । नदीघिसंज्ञइति । भाष्यप्रयोगात्पूर्वनिपातोनद्याः । अनुपपदानादिति । लघुनोपायेनेतिशेषः । दीर्घाच्छ-

* यथाश्रुतेतुगौरवङ्कडारपदघटितमूलद्वयानुसन्धानादितिभावः ।

सित्येवेति । तस्माच्छसइत्यतःप्रागितिशेषः । एवंचतस्माच्छसइत्यत्रशस्ग्रहणंनकर्तव्यंभवति तस्मादितिपञ्चम्याशसीति सप्तम्यन्तस्यषष्ठ्यंततत्वकल्पनसंभवात् चोनकर्तव्यइति लाघवमिति भावः । नन्वेवन्तच्छब्दोऽनन्तरपरामर्शार्थइति सिद्धांतान् नियमशास्त्राणांविधिमुखेनप्रवृत्तिरिति पक्षेवहुश्रेयसीनित्यत्रैवनत्वंस्यात् नतुहरीनित्यादौ तदुत्तरंपाठेतुशस्पदंकर्तव्यंहरीनित्यत्रैव स्यान्नतुवहुश्रेयसीनित्यादाविति दोषश्चेति चेन्न । प्रकृतेनिषेधमुखेनैवप्रवृत्तिरित्याशयात् तस्मादित्यनेनाकोदीर्घःपरामृश्यतइत्याशयाद्वामृगानहंतीति निर्देशश्चात्रलिङ्गंस्पष्टंचेदंसर्वंप्रथमयोरित्यत्रभाष्ये । विपरीतनियमापत्तेरिति । मृगानहंतीतिनॄनूपेकानामूं डितइति निर्देशाश्रयणेतुप्रतिपत्तिगौरवमिति भावः । नन्वेवंप्रथमयोःपूर्वेत्यत्रत्यभाष्योद्योतविरोधः ततोहिग्रन्थादस्यन्यासस्यनिर्दुष्टत्वंलभ्यतइति चेन्न । इज्ग्रहणंनकर्तव्यमिति प्रसङ्गसत्वेनतस्यलाघवपक्षपातित्वादितिवदन्ति।अत्रदीर्घात्सुटीतिसूत्रयितुमुचितम्।आतोधातोः। सानितीति । आकारेणसहितानित्यर्थः । एतेनपञ्चमीसमासेनत्वमतेस्थानिवत्वेनान्यथासिद्धिःप्रयुक्ता । यद्यभिधानमिति । यदीत्यनेनेदंसूचितंवस्तुतःफलाभेदायतेषामनभिधानमेवेति । नन्वनापइत्यस्यप्रत्याख्यानंत्कश्नइति निपातनेनापि भाष्येकृतंतेनह्यत्रलोपोनेष्टइति प्रतीयतेयोगवि*भागेनप्रत्याख्यानन्तुनास्माकंप्रतिकूलमतोभाष्यांतरविरोधमाह । अतएवप्रेति ।

* तत्पक्षेपि योगविभागस्यक्काचित्कत्वेन सादिशब्देलोपाभावस्य सम्पादयितुंशक्यत्वादिति भावः ।

एतदेकवाक्यतयैवनिपातनेनाधातुपदस्याप्भिन्नपरत्वबोधनद्वारालोपइत्यर्थः कार्यः तदग्रे कथंङ्नइति प्रश्नस्तूक्तमाशयमजानतएकदेशिनः । अतएवभूवादिसूत्रेभाष्येयाःपश्यसीत्यस्यान्यथासिद्धिरनापइत्युक्ताकृता । धातुपदस्ययथाश्रुतार्थकत्वेतदसङ्गतिः स्पष्टैव नन्वेवं नमुनइति सूत्रप्रयोगस्यनेयत्कार्यमिति तत्सूत्रीयभाष्यप्रयोगस्यच्चविरोधइति चेन्न । वन्धुनीतिवत् नपुंसकनिर्देशाङ्गीकारेणोभयोपपत्तेरितिवदंति । दीर्घंविधायेति। पररूपवाधकेदीर्घेकृतेपूर्वसवर्णदीर्घेसिद्धान्तइवनत्वस्यसत्वात्तदर्थंकेषांचित् तस्मादित्यत्रतच्छब्देनाक्स्थानिकदीर्घमात्रपरामर्शोनतुपूर्वसवर्णदीर्घस्यैवेति क्तं शस्तुमुधैवेति बोध्यम्। रामानित्यत्रवहुवचनइति दीर्घेकृतेऽनापइत्यालोपस्तुन । पञ्चमीसमासेनस्थानिवत्वात् वाध्यविशेषचिन्तापक्षेपि पूर्वसवर्णदीर्घेकृतेयथोद्देशेभसंज्ञाप्रवृत्त्यापूर्वान्तवत्वेनाकारांतेभत्वेप्राप्तस्यलोपस्यवारणमुक्तरीत्यास्थानिवत्वेन सन्निपातपरिभाषयावा वोध्यम् । नकार्यमिति । नन्वेवंरमाणामित्यादावणान्तत्वलक्षणनुटश्चारितार्थ्याद् रामाणामित्यादौ तुपरत्वाद् वहुवचनइति दीर्घेनुट्विधावनुवर्तमानानापइति लोपप्रसङ्गः । आब्ग्रहणसत्वेत्ववर्णान्तलक्षणोनुट्वहुवचनइति दीर्घापवादइति नदोषः । अतएवभाष्येतन्नकार्यमिति नोक्तमिति चेन्न । चारितार्थ्येपि नुटःप्रातिपदोक्तत्वात् पूर्वप्रवृत्तेःपूर्वदीर्घेपि पञ्चमीसमासेनस्थानिवत्वेन सन्निपातपरिभाषयावालोपाप्रसक्तेश्चकथं कीलालपानांकुलानामिति भाष्यनुसर्वेषामेकदेश्युक्तिरेवेति निपुणतरमालोचनीयम्। इत्यादन्ताः।

जसिच । योगविभागस्येष्टसिद्धार्थत्वात् क्वचिदप्रवृत्त्यापूर्वस्य-गौरीत्यादि सिध्यर्थोयोगविभागइति बोध्यम् । शेषोघ्यसखि । यूभ्यामिति । यूपदहृस्वपदानुवृत्तिफलितार्थकथनमदः । अनवकाशत्वान्नदीति । ननु गवांपत्यैस्त्रियाइत्यत्रसावकाशत्वात्कथं नदीत्वमितिचेदत्राहुः । विप्रतिषेधेपरंकार्यंहृस्वौयूघ्यसखिपतिस्समासएवषष्ठीयुक्तश्छन्दसिवाङिति नदीस्त्रियमियङुवङ्स्थानावस्त्र्यामिवान आख्याहृस्वंलघुइति न्यासभेदेनसावकाशत्वेपि परत्वान्नदीत्वंबाधकंभविष्यतीति शेषग्रहणस्यस्पष्टार्थतावादिनामाशयइत्येकेपरंत्वत्रारंभसामर्थ्यान्नदीसंज्ञापरकार्यत्वाच्चघिसंज्ञे ति भाष्यादिग्रन्थेयोजनैवतस्माद्यथाक्रमएवङितिहृस्वः पतिश्चसमासएवघिः षष्ठीयुक्तश्छन्दसिवा-असखीति न्यासेभसिद्धेसामान्यतो हृस्वान्तस्यविधानंनिरवकाशंविशेषतोविधानेलाघवन्तु मत्यैधेन्वैइत्यत्रबाधमंतरैवघिसंज्ञावस्थित्याप्रतिप्रयुक्तम् । न च सामान्यतोविधानेगवांपत्यैसावकाशेमत्यैइत्यत्रपरत्वाद्बाध्यतइति वक्तुंयुक्तम् । उकारांतस्यसंज्ञाविधानं न कुत्रापिसावकाशमिति धेन्वाइत्यत्रनदीत्वमेवेति फलभेदइति वाच्यम् । तदभावात् । उदंतस्यविधिव्यर्थमित्यस्योकारानुवृत्तिर्नकार्येत्याशय उतत्द्विषयकंवाक्यंनोपप्लाव्यमिति नाद्यः तस्याउत्तरार्थत्वात् नान्त्यःतस्यविप्रतिषेधसूत्रप्रतिबध्यत्वादित्यन्येभाष्य*प्रामाण्यात् ङितिस्त्रियांपतिशब्दस्यानभिधानमित्यपरे । ङितिहृस्वश्चेत्यत्राटश्चेतिवच्चकारः पुनर्विधानार्थस्तस्यानवकाशत्वमित्याशय-

* शेषग्रहणस्य स्पष्टार्थत्वप्रतिपादनपरेति शेषः ।

इतीतरे वस्तुतस्त्वहन्निस्यत्रवक्ष्यमाणरीत्यानवकाशत्वंसुस्थमेवपतिशब्देघिसंज्ञाप्राप्तियोग्यतासत्वात् नियमेनापि बाधइत्यन्यत् । एतेन नव्यमतेपरमसख्यैस्त्रियाइत्यत्रापि सार्थक्यमित्यपास्तम् । असखीत्यस्यप्रसज्यप्रतिषेधत्वांगीकारेणनङिसंबुध्योरित्येतत्तुल्यत्वात् । मावइतीति । अयमत्रमूलाशयः यूग्रहणाननुवृतावपि ह्रस्वपदानुवृत्याविश्वपादिशब्देनातिप्रसङ्गः । अदंतस्यतुसत्यपिघित्वेक्षतिर्नास्ति तथाहि रामेणेत्यत्रेनादेशोनादेशापवादः । रामस्येत्यादौ सत्यपिगुणेक्षतिर्नास्ति । इदानोमिक्परिभाषोपस्थित्यातदप्राप्तेश्च । अच्चघेरित्यत्रेदुद्भ्यामित्यनुवर्ततएवहरिहराविस्यत्रद्वन्द्वे घोत्यस्यविषयेपि नदोषः । अदन्तंचेदजाद्येवेति नियमार्थत्वादजाद्यदन्तमिस्यस्येदन्नेरिति ज्ञापकाच्चनविपरीतनियमइति । आङोना । रूपासिद्धेरिति । प्रियत्रिणाकुलेनेत्यादौ विभक्तेर्हलादित्वाभावेनषट्त्रिचतुर्भ्योहलादिरिति स्वरासिद्धिरपि वोध्या-तत्रस्वमतेविहितविशेषणाभावात् ननु नमुनइत्यस्यसिद्धांतेपि नकारेसिद्धत्वनिषेधकत्वेनरूपंसिद्धम् । अमुष्मैकुलायेत्यादितुनभ*वत्येवेति चेत्तत्राह।नमुनइति। विरोधादिति । एवंचनसो†र्थः सिद्धान्तइदानीन्तुसतवाश्यकस्तथाचामुष्माइत्यादिप्रमितलक्ष्यविरोधःस्यादिति भावः । तत्रार्थेसूत्रसंमतिमप्याह । अतएवसूत्रेति । नकिंचिल्लाघवमिति । नइति न्यासेपिनकारइत्यर्थांगीकारेलघुभूतन्यासत्यागोनिर्वीजः स्यादिति भावः ।

---

* किन्त्वमुनेकुलायेत्येव तथाच तवैवाव्याप्तिरिति भावः । † नकारेकर्तव्येकृतेचमुत्वस्यासिद्धत्वंनेत्यर्थः ।

औङआपइति सूत्रभाष्यऔविभक्तेर्ङित्वेखट्वइत्यादौ याट्-
स्यादित्युक्तंतदयुक्तम् । शीभावस्ययाडपवादत्वात् । अतो-
ऽन्यरीत्यायोजयति । अतएवेति । हरिणामत्येति । तक्रकौंडि-
न्यन्यायेननादेशस्यगुणबाधकत्वमात्रारुचिः । नयाडिति । ह-
रीत्यादौ गुणोनेत्यपि बोध्यम् । घेर्ङिति । दिगिति । दिगर्थं-
स्तुतत्रतदनापत्तौनुडापत्तिः । सिद्धांतेहिपरत्वादाटानुड्बाध्यते-
रमायामित्यादौ ङेराम्याडनापत्तिरपि बोध्यायदितत्रङेर्डाम् ।
क्रियतेतदारमायामित्यत्रपूर्वंप्रत्ययत्वाभावेनेत्वाप्रवृत्त्याङ्का-
रयुक्तएवादेशेकृतेवार्णपरिभाषयाया*टिकृतेप्रत्ययादित्वाभा-
वादित्वंङस्यनस्यात् । अनित्यत्वेनाप्रवृत्तौतुनमानंयदितु भयो-
रादेशत्वेएवसमानकार्यित्वएवसेत्यनुगमवादिमतमवलंबसेत-
दासुपःसंप्रतिङादित्वासंभवेनभौतपूर्विकंतत् गृह्यतेवासुपीति
निवर्त्यात् ङवतइत्यत्रैवप्रवर्ततवेत्यादिनानाविकल्पग+तंकुक्षौ-
निक्षेपामियद्दिनिर्देशादिकंप्रदर्शयिष्यसितदाप्रतिपत्तिगौरवेण
भीषयाष्यामीति तूष्णीमेवास्वेति । ङसिङसोश्च । नासूत्रो-
ति । जयंतिभवंतीत्यत्रांतरंगत्वापररूपेऽचःपरेतिस्थानिवत्वे-
नगुणेपरादित्वेनङित्वसत्वात् प्रकृतसूत्रेपि दोषो बोध्यः ।
पूर्वरूपेतुनस्थानिवत्वम् । पूर्वपरविधित्वात् । अच्चघेः । ननु
तत्प्रतिज्ञायांकिंमानमत आह । अतएवेति । समत्वादिति ।
नन्वित्संज्ञकविशिष्टेस्वंरूपंशब्दस्येत्युक्त्याविशिष्टस्यविधानेश्र-
वणापत्तिरतइत्संज्ञालोपौप्राथ्यैतअनित्संज्ञकतपरेतुतपरसूत्रप्र-
वृत्यातकाररहितस्यैवविधानमितिवैषम्यमिति चेन्न । भाष्य-

* अन्तरङ्गानापीत्संज्ञालोपौबाधित्वेति शेषः ।

मानेनसवर्णग्रहणंनेत्यनेनगुणाभेदकत्वादिप्राप्तस्यैवतपरसूत्र-
प्राप्तस्यापिनिषेधध्रौव्यात्। अतएवकिमोदितिपक्षेऽनुनासिकोनै-
तिबोध्यम्। फलभेदोनेति। नन्वौदादेशेदित्त्वंनाश्रयणीयमतो-
पिफलैक्यंनहिभाष्यऔदादेशोदिदिति। अदादेशोदिदितिवा-
कंठरवेणोक्तमस्तीति चेन्न। दित्त्वमाश्रित्यतोति प्रत्याख्याना-
वसरेभाष्यऔकारस्यतपरत्वानुक्त्यातेनफलभेदापत्तेरिति भा-
वः। इत्त्वंनेति। अलोंत्यस्येतितुननानर्थकइति निषेधात् त-
त्प्रत्याख्यानेतुनदोषइति स्पष्टमत्रैवसूत्रेभाष्ये। प्रदेशेष्विति।
अस्तिसिचोऽपृक्ते गुणोऽपृक्तेवेरपृक्तस्येत्येतेषुसूत्रेष्विति भावः।
हल्ग्रहणोनैवेति। तत्राद्योरुतोवृद्धिर्लुकिहलीत्यतोहलीत्यनु-
वृत्तावपितदादिविधिप्रतिबन्धायहलिति वक्तव्यम्। तृतीये-
तुवेरित्यनुनासिकनिर्देशमाश्रित्यापृक्तस्येति भाष्येप्रत्याख्या-
तमिति नकर्तव्यम्। हल्ङ्याब्भ्यइतिसूत्रेतुवर्ततएवेतिबोध्यम्।
अदृष्टार्थमिति। नन्वेवं हल्ङ्यादिसूत्रेतदन्तविधिनाहलंतंसु-
तिसिलुप्यतइत्यर्थेनहन्यादित्यादावतिप्रसङ्गः संज्ञाकरणेतुन-
तदन्तविधिरिति दृष्टंफलम्। न च निर्दिश्यमानपरिभाषया-
निस्तारः सूत्रेषष्ठीनिर्देशाभावात्। यदितूक्तातिप्रसङ्गभ-
ङ्गायषष्ठीनिर्देशः क्रियतेतदाभिन्तादित्यादावतिप्रसङ्गोदुर्वारः।
स्थानिवद्भावविषयउक्तपरिभाषाया अप्रवृत्तेरिति चेन्न। सुति-
सिहलिति सुतिसिहलइति वाकर्मधारयनिर्देशेपरनिपातनात्त-
स्य विशेषणत्वाभावनिर्णयेन तदन्तविधेरभावेनातिप्रसङ्गाभा-
वात्। षष्ठीतत्पुरुषस्तुन निषादस्थपतिवद् गौरवात्। ए-
तेनापृक्तग्रहणं चिन्त्यप्रयोजनमित्यादिशब्दरत्नादिग्रन्थाव्या

ख्याताइति बोध्यम् । ख्यत्यात्परस्य । भिन्नावयवाविति । अ-
न्त्यावयवेत्यर्थः । अतएवाह । प्रातिपदिकान्त्यवर्णादेरिति ।
अन्यथासख्युर्घातकइत्यलुक्समासेऽतिप्रसङ्गःस्यादिति भावः ।
लक्षणयेति । यद्यपि तदन्तविधिकल्पनेनापि भाष्यमुद्द्योते
योजितं तथापि वर्णसंज्ञापक्षेलक्षणावश्यकत्वेनात्रसैवादृता ।
किञ्चतदन्तविधिकल्पनेलिङ्गविशिष्टपरिभाषाया अप्रवृत्तयअ-
नित्यत्वमाश्रयणीयम् । विभक्तौलिङ्गविशिष्टाग्रहणमिति तन्नि
षेधप्रवृत्तयेकार्यकालपक्षेपदैकवाक्यतावाश्रयणीया स्यात् । ल-
क्षणापक्षेतु वक्ष्यमाणरीत्यान्यायतएवतदप्रवृत्तिः सिद्ध्यतीति
सैवादृतेति बोध्यम् । प्रातिपदिकवदुपस्थापकेति । ननुत-
द्वदुपस्थापकत्वंविशेषणतयाविशेष्यतयामुख्यविशेष्यतयावास-
र्वसाधारण्येनवेहविवक्षितं नाद्यान्त्यौसख्यवयवेलक्षणायाम-
पि विशेषणतयासखिशब्दस्यभानसत्वात्तद्वदुपस्थापकत्वध्रौव्ये
णप्रकृतेपरिभाषाप्रवृत्तेर्दुर्वारत्वात् । अतएवनद्वितीयोऽपि । आ-
नुपूर्वीनिष्ठप्रकारतानिरूपितविशेष्यताया अपिसखिशब्दे सत्वा
त् । नापितृतीयः । प्रातिपदिकार्थेति सूत्रेपितदप्रवृत्त्यापत्तेः ।
द्वन्द्वनिर्देशेबहुशस्तत्संचारस्य भाष्योक्तस्यासम्बद्धत्वापत्तेश्चे-
ति चेदत्रोच्यते सर्वसाधारण्येनैवेह तदुपस्थापकत्वं विवक्षितं
लक्षणान्चशक्यतावच्छेदकारोपः शब्दपराणाञ्च शब्दनिष्ठा-
जातिः प्रवृत्तिनिमित्तं । एवञ्च सखिशब्दावयवेषु तदारोपेप्य-
वयवानांजातेर्वानतद्वत्वमिति । यद्वास्तुशब्दपराणामानु-
पूर्वीप्रवृत्तिनिमित्तं ध्वंसादिरूपायास्तस्याअपिनतद्वत्व मितिच ।
हितविशेषणानाश्रयणेनैवेति । विधीयतेस्माद्विहितं प्रकृ-

तेप्रकृतिरूपंतदादीत्यर्थः । तेन यत्सखिपत्योर्विशेषणन्तदना श्रयणेनेत्यर्थः । अपादाने निष्ठान्तएङ्ह्रस्वादिति सूत्रभाष्ये- स्पष्टेति तत्सूत्रएवोक्तम् । अयंभावः । ङसिङसोरिति प्रत्य- यग्रहणेन तदादीत्युपस्थितंनसखिपत्योर्विशेष्यंतयोः श्रूयमाण पदार्थविशेषणत्वस्यन्याय्यत्वात् नापिस्वातन्त्र्येणपरपदार्थवि- शेषणव्यधिकरणविभक्तिद्वयापत्तेः । किन्तुसखिपत्योर्विशेषण- म् । एवंचसुसखेरित्यादौ नातिप्रसङ्गइति । परिभाषानाश्रय- णेनैवेति । ननु लिङ्गविशिष्टपरिभाषयासखीशब्दस्यापि ग्र- हणेनकृतद्धस्वेत्वातिदेशेन तत्वसत्वात्सुखेनैव लक्षणप्रतीतिः परिभाषाप्रवृत्तिर्नेति चेन्न विभक्तौलिङ्गविशिष्टाग्रहणादल- मर्थस्तु वस्तुतस्तुभाष्यस्यायं भावः सुसखेरित्यत्रातिव्याप्ति- परिहारायसखिपतिभ्यांपरस्येति सूत्रेयदिलक्षणप्रतिपदोक्त- परिभाषासंचरति तदासहखेनवर्ततइत्यर्वानिष्पन्ने व्याप्तिः । तत्परिहारायययनित्यत्वात्तदप्रवृत्तिं ब्रूषेतर्हिपूर्वोक्तेऽतिव्या- प्तिरित्युभयतःपाशारज्जुरिति । पतिःसमासएव । समा- सइत्युक्तेरिति । पतिन्नेति वाच्यइति भावः । बहुत्रपूर्वे- नघित्वमिति । तत्रैव नघित्वमित्यर्थः । पतिन्नेत्युक्तेतुभूप- तिनेति समासेपि नस्यादिति भावः । एवमुक्तिस्तुवृत्तावि- तिन्यासेदोषदानमिति बोध्यम् । अतएवेति । प्रसिद्धावेवका रोनत्ववधारणेतेनपतीयतेऽक्विप्पत्युरित्यादौनघित्वम् । प- त्यावुपपीडंशेतेपत्योपदंशञ्चुंवतइत्यादिकृदन्तेतौच नघित्वमि- ति बोध्यम् । लाक्षणिकइति । अतएवभाष्योक्तवर्णसंज्ञापक्षे णनफलभेदइति बोध्यम् । पतिसखीसमानइति इदम्प्राचाम-

नुसारेण तन्मतेऽभिव्यक्तेति न्यायेनवृद्धेर्वारणात् । पदकार्य्यं विषयकत्वन्तस्येति स्वमतेतुसख्यायावितियुक्तम् । इत्यादीष्टेति। आदिनाद्वन्द्वे पूर्वनिपातसंग्रहः । बहुत्वसंख्येति । इदंप्राचामनुसारेण स्वमतेबहुत्वेसंख्यात्वाभावस्य वक्ष्यमाणत्वात् । संख्येयविषयप्रश्नेति । यद्यपि संख्याप्रश्नेवृत्तिस्तथापि संख्येयमपि तत्प्रश्नेविषयोभवत्येवमेवोक्तम् । भाष्येस्पष्टत्वादिति। तत्रहिडत्यान्तादेकवचनद्विवचनेनस्तः तत्र संख्यायानिर्णयेनप्रष्टव्यत्वाभावेन किमोऽप्रयोगादित्यभिप्रायकमुक्तम् । बहुगणशदन्तेति । तिपर्युदासस्तुनोक्तः । तस्यार्थवत्परिभाषाबाधेनापि सार्थक्यसम्भवेन प्रकृतार्थसाधनेसाधारणत्वात् । असञ्जातविरोधन्यायेन प्रथमोपगतसंख्यापदेसंचरितकृत्रिमन्याययप्राधान्यौचित्याच्च । संख्यापदार्थनिर्णायकः कृत्रिमन्यायः तिशब्दार्थनिर्णायकोर्थवन्न्यायः तत्रकतरस्यबाधइति संशयेशदन्तपर्युदासस्यैव विनिगमकत्वं वाच्यम् । ततोवरन्तन्मात्रप्रदर्शनमेवेति न । अयमेवतत्रत्यभाष्यप्रदीपोद्द्योतानामाशयइति बोध्यम् । अभ्यासाम्रेडितादीति । तेषुमहासंज्ञाकरणंप्राचामनुरोधेनेति बोध्यम् । तयोरिति । तदर्थयोरित्यर्थः । नियतविषयेति । नियतानियतान्येकत्वान्येतद्विषयेत्यर्थः । नियतैकत्वज्ञानाद्वित्वादेरत्यन्तानियतैकत्वज्ञानाद्बहुत्वेडतिरिति भावः । बहुत्वादिहीति । आदिनागणत्वन्तच्छब्दवाच्यं हीत्यर्थः । यथाश्रुतआदिपदग्राह्यदुर्वचंस्यादिति बोध्यम् । द्व्यादीति । द्वित्वादीत्यर्थः । धर्मविशेषइति । न तु द्वित्वादिरूपमित्यर्थः । सचैकोऽखण्डोपाधिस्तस्य चानेकेषु पर्याप्ते-

रेकत्वम् समवायवदिति बोध्यम् । न च बहुत्वस्यत्रित्वाद्य-तिरिक्तत्वेगौरवमिति शंक्यं बहुत्वस्यत्रित्वादिरूपत्ववादिनां बहुत्वत्वजातिरूपम् । बहवःत्रयइत्यादिप्रवृत्तिवैलक्षण्याया-वद्वयमतिरिक्तं वाच्यं मयातुबहुत्वमेवातिरिक्तमिष्यते बहुत्व-त्वन्तुवह्वितरावृत्तित्वेसतिसकलबहुवृत्तित्वरूपमिति। विशेषा भावादथत्वयोच्यतेमयाबहुत्वत्वमपि जातिरूपमतिरिक्तंनेष्यते किन्त्वेकत्वद्वित्ववद्भेदविशिष्टसंख्यात्वमेव बहुत्वत्वमिति त-र्हिमयापि बहुत्वमतिरिक्तंनेष्यते किन्तुएकत्वद्वित्ववद्भेदएवे तिवक्तुंशक्यमित्यलमतिप्रशस्तविचारेण । अतएवेति। बहु-त्वेसंख्यात्वाभावादेवेत्यर्थः। इत्युक्तमिति। ननु बह्वादीनां शब्दरूपाणांत्रित्वादिवृत्तिसंख्यात्वजातिमद्भिन्नत्वमित्यर्थेल क्षणापत्तेश्चव्यपदेशातिदेशश्चायंत्रित्वादिसंख्यायायोव्यपदेशः संख्येतिसबह्वादिषु भवतीत्यर्थेनसर्वेष्टसिद्धौ बहुत्वस्यसंख्यात्वे पिनेदं भाष्यंविरुद्धं किञ्चवतुडतिविषयकमेवास्तु तयोःसंख्या वाचकत्वस्य बाधात्तुलक्षणेति च तत्तात्पर्यंवक्तुंशक्यम्। कि-ञ्चबहुत्वस्यसंख्यात्वाभावेसंख्यात्वैव तथातिङामिति भाष्येसं ख्यापदेनबहुत्वमपि विवक्षितम् । तथा तस्यपूरणइति सूत्रे-वार्तिकं संख्यापूरणइति वक्तव्यमिति। अत्रापि संख्यापदेन-बहुत्वंविवक्षितम् । बहुतिथइत्यादिसिद्ध्यर्थम् तद्विरुद्ध्येत। एवं बहुस्थलेषु संख्यापदेनबहुत्वंविवक्षितम्। तद्विरुद्ध्येत त-स्मादस्तुबहुत्वंत्रित्वादिरूपासंख्यैवेति चेन्न। अत्रप्रकरणेसं-ख्यापदेन संख्यावाचकपदस्यैवविवक्षितत्वात् । किञ्चबहु-त्वस्यसंख्यात्वेभूयर्यादीनां संख्याकार्य्यदुर्व्वारम्। न च नि-

यमेननिस्तारः सम्पूर्णसूत्रस्यभाष्येप्रत्याख्याततत्वेन तद्विरोधस्य
दुष्परिहरत्वात् । तत्रतत्रभाष्येबहुत्वस्य संख्यापदेनव्यवहार-
स्तु बहुशब्दस्यसङ्ख्यासंज्ञकत्वेन शब्दार्थयोस्तादात्म्याङ्गीका-
रेण द्विरेफव्यवहारवद् हिरण्यपूर्वकशिपुमितिवच्चनेयः ॥ ए-
वञ्चतस्यनतादृशनिश्चयहेतुत्वमिति भावः । तस्यत्रित्वादिभि-
न्नत्वेपि त्रित्वादिवृत्तिसङ्ख्यात्वजातिमत्त्वमस्त्येव । अतए-
वनित्यंबहुवचनान्तइति प्रतीकेबहुत्वसङ्ख्यावच्छिन्नेति स्व-
ग्रन्थोबहुत्वंसंख्येत्यभिप्रायकाभाष्यादिग्रन्थाश्च स्वरसतःसङ्ग-
च्छन्ते। बहुत्वंनसङ्ख्येति। शब्दरत्नादिग्रन्थास्तु शब्दपराबहु-
शब्दात्त्वप्रत्ययेबहुशब्दः नियतविषयपरिच्छेदहेतुत्वरूपसंख्या
त्वाभाववानित्यर्थाबोध्याः । यद्वा बहुगादित्यत्रसंख्यापराद्ब-
हुशब्दाद् भावप्रत्ययोबहुत्वादीत्यर्थः । संख्याव्यापकइति ।
तादात्म्येनयत्रसङ्ख्यातत्रसमवायादिनासइत्यर्थः । एवञ्चब-
हुत्वत्वेनरूपेणन बहुशब्दात्त्रित्वभानमिति न तादृशोनिश्चयः
त्रिशब्देनतुत्रित्वभानमिति सोऽस्त्येवेति भावः । धर्म्मविशे-
षइति । न तु त्रित्वत्वादिरूपइति भावः । बह्वादिकयाचापि
संख्यायतइति भाष्यविरोधः । अनेनहिभाष्येणैकादिषु च तु-
ल्योयोगइति प्रतीयतइति चेदत्राह । यत्त्विति । एकादिकये-
ति । एकत्वादिकयेत्यर्थः । बह्वादिकयेति बहुगणशब्दवाच्य-
बहुत्वसंख्ययेत्यर्थः । यथाश्रुतमेवतदादिशब्दरूपेत्यर्थकं स्व-
व्याप्येति । यत्रयत्रशक्तिसम्बन्धेनत्र्यादिशब्दस्तत्रतेन स-
म्बन्धेनबहुगणशब्दाविति भावः । त्रित्वादिसंख्येति । पूर्वव-
त्वप्रत्ययेनत्रिशब्दार्थसङ्ख्येत्यर्थः । शेषंप्राग्वद्व्याख्येयमि-

तिवदन्ति । सङ्ख्यायतइति । अस्येतीति शेषः बहुत्वंसंख्ये-तिवादिनापिबहुइति विषयएवंदिशैवव्याख्येयत्वात् । सम्पूर्णसूत्रस्यत्वयानियमार्थत्वानभ्युपगमादिति भावः । नन्वेवमपि कतिशब्दासंग्रहः । जिज्ञासाविषयसङ्ख्यावन्तोहिकतिशब्दवाच्याः तत्रत्रित्वादेरेवसङ्ख्यारूपत्वेतद्व्याप्यत्वंदुर्वचं । अतःप्रकारान्तरेण तत्संग्रहमाह । कतिशब्दोपीति । वस्तुतस्तु समवायतादात्म्यघटितसामानाधिकरण्येन संख्यात्वस्यत्रित्वादिव्यापकत्वंसुवचम् । अभेदेनव्यापकत्वमित्यत्रमानाभावश्चेति बोध्यम् । उह्यमिति । अयंभावः । एकत्वादिषु लोकप्रसिद्धयोगस्यवह्वादिषु बाधात्तदर्थान्तर्भावेण संख्यापदस्यव्यावृत्तिः स्वीक्रियतेसाचेहैवनप्रदेशेषु मानाभावात् । एतेनैवंसतिभूयआदिषु सङ्ख्याकार्य्यातिप्रसङ्गइत्यपास्तम् । बह्वादिसङ्ख्यापदंयोगरूढमिति यावत्सङ्ख्यापदेवाहुलकात्करणेऽङिति । इत्यलमिति । इदं सूत्रंभाष्येप्रत्याख्यातं तस्यायंभावः । आरम्भेपि प्रदेशएकादीनां ग्रहणायातिशदन्तायाइति साकान्यापेक्षंज्ञापकंवक्तव्यमेव तद्वरंबह्वादीनामेव सङ्ख्यापदेनग्रहणायतादृशज्ञापकाश्रयणम् । एतेनकौस्तुभकृदुक्तं समाहितमित्यलमर्थः । एतेनेति । उक्तसङ्ख्यात्वस्यबहुगणयोरभावेनेत्यर्थः । नन्वेवंक्लिष्टकल्पनयाबह्वादिषु योगरूढस्वीकारेफलमस्तिनवाऽऽद्ये महासंज्ञाकरणसामर्थ्यात्प्रदेशेकृत्रिमन्यायबाधइति भाष्यासङ्गतिः । द्वितीयेस्तुसङ्ख्यापदस्यरूढिरेवालमनयाक्लिष्टकल्पनयेत्यरुचेराह । यद्वेति । सूत्रेबहुग्रहणन्त्वित्यारभ्यव्याख्यान्तरम् । अत्रनियमेनसङ्ख्येति शब्द-

स्यापि सङ्ख्याकार्य्यंवार्य्यतइति विशेषइति बोध्यम् । तयोरिति । बहुगणशब्दयोरित्यर्थः । अनियतेत्यादि नियतैकत्वनिश्चयजनकत्वाभावेनेत्यर्थः । तादृशनिश्चयजनकशब्दएव सङ्ख्यापदस्य वृत्तिरसङ्ख्यासङ्ख्येत्यादिभाष्यादेकादिकयाचापिभाष्याच्च सङ्ख्यासंज्ञास्यादिति वार्तिकाच्च । अतएवसङ्ख्येतिपदेनसङ्ख्याकार्य्यन्त्वदीयनियमेनतुवारणीयम् । तस्य बहुवाच्त्विाभावात् । प्रत्ययलोपे । अनुवृत्तेति । तत्फलन्त्वपि पूर्वंइङ्गतौक्विप्भागुरिमतेऽल्लोप पिपीपियः इत्यत्रैरनेकाचइति यण्ननन्देत्यादावाम् चनप्रत्ययपदाभावेतु यस्यकस्यचिल्लोपेप्रत्ययलक्षणमित्यर्थेनानेकाच्त्वाभावेनाप्राप्तौ यणामभावावतिदिश्येयातां किञ्चोक्तेर्थेऽवैहतीत्यत्रष्यङ्स्यादिति बोध्यम्। लोपइति चसतिसप्तम्यतएवपञ्चभवेत्यादावतिङइति निघातप्रतिषेधः दधीयतिमधूयतीत्यत्रसुबन्तलक्षणः क्यच्वेभिदीतिच्चेच्छिदीतीत्यत्रयङोवेतीट्चसिद्ध्यति । अवयवलोपेमाभूदिति । अत्रकैयटोऽन्यतमावयवलोपेतद्घटितसमुदायस्याप्यदर्शनमस्त्येव यथावयवेदग्धेपटोदग्धइति मुख्योव्यवहारइति तस्यायंभावः । समवायिकारणनाशेसत्यसमवायिकारणनाशेवाकार्य्यंनाशोस्त्येवेति सर्व्वसम्मतम् । एवंचमहापटस्यनाशोमुख्यएवतन्न । शसहकृताचकारणकलापात् खण्डपटोत्पत्तिस्तद्वत्प्रकृतेपीति आघ्नीयेत्यादाविति । आदिनासमिधमिच्छतिसमिध्यति क्विप्समिधेत्यत्रहीनादेशोन ज्ञापकमिति । अयंभावः तदभावबुद्धिंप्रतितद्बुद्धिः प्रतिबन्धिकेति सर्व्वसिद्धंशास्त्रे त्वाऽऽहार्य्यापि सातथेतिनिर्व्विवादम् । एवंचा

वयवलोपेनसमुदायलोपेसत्यप्यवयवान्तरेतिदेशेन तद्बुद्धिस-
त्वेन कथं तल्लोपबुद्धिः स्यादतःकैयटोक्तम् नयुक्तंकिन्तुज्ञाप-
कमेवाश्रयणीयम् । अतएव भावरूपआदेशेनतल्लोपकार्य्य-
मिति प्रपञ्चितं प्रागिति । नन्वेवमाघ्नीयेति भाष्योदाहर-
णासङ्गतिः तथाहि कात्स्न्र्यनिवेशेपि प्रत्यासत्तिरवश्यंवाच्यैव
प्रत्ययलोपेलुप्तप्रत्ययवृत्त्यसाधारणधर्म्मनिमित्तकं भवतीत्यन्य-
थासुदृषदित्यत्रदीर्घोदुर्वारः । असःकृत्स्नप्रत्ययस्यलोपसत्वा-
दसम्बुद्धौसौविधानेन प्रत्ययलक्षणत्वाच्च । अतएवैकेनैवप्रत्य-
यपदेन कात्स्न्र्यलाभेद्वितीयप्रत्ययपदमकार्य्यमित्युक्तं भाष्ये-
प्रत्यासत्त्यनङ्गीकारेतूक्तरीत्योभयोरप्यावश्यकत्वेन तदसङ्गतिः
स्पष्टैव। एवञ्चतवमतेलुप्तः सकारात्मकः प्रत्ययस्तद्वृत्तिझल्त्वं
नप्रत्ययासाधारणम् कैयटमतेतुनदोषः लुप्तप्रत्ययविशिष्टः त-
द्वृत्तिस्तदसाधारणोधर्म्मआर्द्धधातुकत्वादिरेवेति चेन्मैवंलु-
प्तप्रत्ययएवयत्कार्य्यंप्रयोजकस्तत्प्रत्ययलोपेपि भवतीत्यर्थेना-
दोषात् सुदृषदित्यत्रलुप्तः । अस्सत्वप्रत्ययोप्यव्युत्पत्तिपक्षेसुप-
याइत्यादौ दीर्घप्रयोजकआघ्नीयेत्यत्रतुलुप्तः सःसतुप्रत्ययसं-
ज्ञकएव। अनुनासिकलोपप्रयोजकइति। अवयवेपि प्रत्ययत्वव्य-
वहारस्येति । नन्वेवं प्रत्ययादेरित्संज्ञायामतिप्रसङ्ग आदिप-
दानुवृत्तिसामर्थ्येन कृत्स्नप्रत्ययादेरेवविवक्षितत्वात् । एवमाय-
नेयीत्यत्राद्युदातश्चेत्यत्राप्यतिप्रसङ्गोभञ्जनीयः । नन्वेवमपि
येनविधिरिति सूत्रेभाष्येऽचिष्णुइति सूत्रेतदादिविधेरभावे-
श्रियौभ्रुवावित्यत्रैवस्यात् श्रियःभ्रुवइत्यत्रनस्यादित्युक्तं त-
द्विरुध्येतप्रत्ययावयवेपि प्रत्ययत्वसत्वेनाचिप्रत्ययइत्यर्थेऽजन्ते

प्रत्ययइति वार्थेपितन्नतत्प्रवृत्तेर्न्निष्फलत्वादिति चेन्मैवम् । तस्यप्रत्ययत्वेपि विधानाभावेनाङ्गसंज्ञानिमित्तत्वाभावात् । एतेनकर्म्मठइत्यत्रेकादेशोपि परिहृतःठस्येकइति सूत्रेभाष्येकर्म्मठेऽतिप्रसङ्गमाशंक्याङ्गस्येति वर्त्ततेऽङ्गस्य यष्ठकारःकिञ्चास्य ठकारनिमित्तंयस्मिन्नङ्गमित्येतद्भवतिकस्मिंश्चाङ्गमित्येतद्भवति प्रत्ययइति यदुक्तन्तस्यप्रतीयतइति व्युत्पत्त्याविहितइति नतद्विरोधः अङ्गसंज्ञासूत्रेसाक्षादेवविधानमाश्रीयतेनघटकतयेतित्त्वतदाशयः यदपि प्रत्ययस्यादिति सूत्रेभाष्येकेति संघातग्रहणंकारिकाहारिकेत्यत्रनस्यात् वर्णपक्षेतुवचनसामर्थ्यादेवभविष्यतीत्युक्तम् । तस्यायमाशयःस्यग्रहणेसतिसामर्थ्यात्परिभाषाबाध्यते वर्णग्रहणेतुवचनसामर्थ्यादेवन प्रवर्त्ततइति स्यग्रहणंनकार्य्यमिति । एवंभोह्वोति सूत्रेपितत्सामानाधिकरण्यानुरोधात् कृत्स्नप्रत्ययग्रहणमिति तद्विरोधोनेति बोध्यम् । अनेनावयवेप्रत्ययत्वज्ञापनेपितद्व्याप्ययित्वादेरज्ञापनात् । अन्यथाभूयास्तामित्यादाविडादेरापत्यावहूपल्लवापत्तिः । एवमन्यत्रातिप्रसङ्गोभञ्जनीयस्ततोज्ञापकसिद्धस्यासार्व्वत्रिकत्वेनयदिप्राप्नोति । एवंचेति । एतेनकैयटमतेप्रत्ययग्रहणात् स्वरूपतःप्रत्ययस्यग्रहणमिति कल्पनाप्रत्युक्ताचारितार्थ्येपि फलाभावात् । आदेशप्रेति । अत्रावयवप्रत्ययविषयवाक्येतद्विधानाभावेनासम्भवात् तदादेरित्यस्यानुपस्थितिरिति । एधिषीष्टेत्यादौ सीयुट्सुडादेः षत्वसिद्धिरित्यपरमनुकूलम् । अन्यथातदादेरित्यस्योपस्थित्येणकवर्गान्ततदादेरिति सूत्रार्थेनतन्नतदनापत्तिरतोलक्ष्यानुरोधान्नैवमर्थः किन्त्विण्कवर्गा-

भ्यांपरस्यतदादेरवयवोयः प्रत्ययंस्तदवयवस्यसकारस्यषत्वमि-त्यर्थइति वक्तव्यंस्यात् । लक्षणादीति । आदिनाआद्ये सौत्र-त्वाद्द्वन्द्वःव्यधिकरणान्वयश्च । अन्त्येप्रसज्यप्रतिषेधो व्य-धिकरणान्वयश्चइति । चरितार्थमिति । एवंचैकयैवकल्पनयाद्द्व-योश्चारितार्थ्यमिति लाघवंकैयटमतेकल्पनाद्वयमिति । गौर-वमिति भावः । ननु कात्स्न्र्यंविवक्षायाः फलंविद्ध्यर्थमिति पक्षआश्रीयेति । नियमार्थमिदंसूत्रमिति पक्षेतद्विवक्षायाःकिं फलमिति चेच्छृणुतद्विवक्षांविनातस्यनियामकतायाएववक्तु-मशक्यत्वमिति किञ्चप्रथिमानमाचष्टेप्रथिमयतिततः क्विप्प्र-थिमित्यत्रानश्चेति टचःसिद्धिः । एवंवाग्मिनमाचष्टेवाग्मयति ततःक्विप्संयोगान्तलोपेबहवोवाग्मोयस्यांनगर्य्यांसाबहुवाग्मका नगरीत्यत्रेनः स्त्रियामिति कप्सिद्धिश्च । एवंसर्व्वंतआचष्टेस-र्व्वंतयति ततः क्विप्सर्व्वादित्यत्रात्वसन्तस्येति दीर्घसिद्धिश्च । अचःपरेति स्थानिवत्त्वन्तुनर्व्यमतेसपादसप्ताध्यायोस्थदीर्घ-विधौतन्निषेधात् । एवंसर्व्वाद्विद्यतेयस्यससर्व्वस्वोसर्व्वस्विना-वित्यत्रास्मायामेधास्रजइति विनि प्रत्ययस्यसिद्धिः । एवंसुस-र्व्वादित्यत्रनसुधातोः क्विप्परमेणसमासआचक्षाणेणिचिक्विपि परमन् । सुनासमासेसुपरमन्नित्यत्रसोर्म्मनस्यलोमोषसीति स्व-रसिद्धिश्चेहापि नस्थानिवद्भावो ऽपूर्व्वविधित्वादन्त्येस्वरविधि-त्वात् । अन्यथा प्रत्ययावयवलोपेपि प्रत्ययासाधारणधर्म्मनिमि-त्तकमेवेति नियमेनान्नन्तत्वमिन्नन्तत्वमसन्तत्वंस्थानिद्भावेन-लभ्येतेत्युक्तोदाहरणेषूक्तविधीनामप्रवृत्तिरेव स्यात् । एतेनक-श्चित् पर्य्युदासेनकश्चित्तत्सूत्रस्थपदान्तरसाहचर्य्येणश्रूयमाण-

तदन्तेष्वेवोक्तविधीनांप्रवृत्तेरङ्गीकारेण वक्ष्यमाणलक्ष्येषु तदप्र-
वृत्तिसिद्धौप्रत्ययलक्षणसूत्रंऽयर्थम् साहचर्य्यन्नसर्व्वत्रव्यवस्था-
पकमितिहितज्ज्ञापनार्थन्तदितिशब्दरत्नाद्युक्तम् । बहूनांज्ञा-
पकान्तराणांसत्वादित्यपास्तम् । साहचर्य्येणतत्रैवतत्प्रवृत्त्य-
ङ्गीकारउक्तलक्षेषु तदप्रवृत्त्यापत्तिः नचेष्टापत्तिः सुदृषत्प्रासा-
दइति भाष्योदाहरण स्यासङ्गत्यापत्तेः । नियमार्थमिति । त-
त्फलन्तुसुदृषत्प्रासादइत्यत्रस्थानिवत्वेनासन्तत्वात् स्वरदीर्घौ-
न ननुनिर्दिश्यमानपरिभाषयानिर्दिश्यमानावयवाचएवदीर्घ-
विधानात् कथमत्रतत्प्राप्तिरिति चेच्छृणु असपदस्यषष्ठ्यन्तत्वा-
भावेन तत्परिभाषायाअप्रवृत्तेरिति नन्वन्तरङ्गानपीति परि-
भाषयेत्संज्ञालोपाभ्यांप्रागेवजसोलुकि स्थानिवत्वेन जसन्त-
त्वमेवनासन्तत्वं न च स्थानिवत्वेनजसन्तत्वेऽसन्तत्वमर्थस-
माजग्रस्तमिति वाच्यम् । एवंसत्याटिटदित्यादौस्थानिवत्वे-
नण्यन्तत्वइति निर्दिश्यमानणिबुद्धेरप्यर्थसमाजग्रस्तत्वेन षा-
ष्ठिस्वस्यादेशत्वेणि लोपोनस्यादिति भाष्योक्तेरसङ्गत्या-
पत्तेः । एवञ्च कथमेतदुदाह्रियतइति चेत् शृणुफलेविशेषा-
भावेनोक्तपरिभाषयातस्यलोपइत्यस्याबाधनात् न च प्रकृत-
सूत्रारम्भेविशेषोऽन्यार्थमावश्यकस्योक्तत्वात् फलेविशेषत्वेपी-
त्संज्ञासूक्तपरिभाषयानबाध्यत आकडाराइति नियमारम्भे-
णसंज्ञानकस्यापि बाध्यानबाकस्यापि बाधकेत्यर्थस्यसामा-
न्यतोज्ञापनाङ्गीकारादतएवगर्गाविदाइत्यादौ ञिनित्यादेरि-
ति स्वरवारणार्थंलुकिस्वरविधौ प्रत्ययलक्षणंनेति वचनमार-
ब्धंनकृतमिति सूत्रेभाष्यइत्संज्ञायालुकः प्रागप्रवृत्तौत तद-

सङ्गतिः स्पष्टैव । अतएवदेवदारोर्विकार ऽफलंदेवदारुओ-रञित्यत्रफलेलुगिति तस्यविकारोऽञितश्च तत्प्रत्ययादित्यञि-देवदारवमित्युदात्तं सिध्यति तथा विदस्यगोत्रापत्यानिवि-दाः ततोविदस्ययून्यतइञ्तस्यण्यक्षत्रियेति ञितश्चप्रत्ययात् परत्वाल्लुकिविद इदंचनचैवंभसंज्ञापि लुकानवाध्यत इति राजपुरुषासिद्धिरिति वाच्यम् । उपजनिष्येति न्यायेननलु-मतेतिनिषेधेनप्रागपि तदप्रवृत्त्यङ्गीकारादिति बोध्यम् । एवं पीतमम्बरंयस्याःसापीताम्बरेत्यत्रसोर्लुकि स्थानिवत्त्वेनोगिद-न्तत्वादुगितश्चेति ङीम्न । एवंशिखिनमाचष्टइति णिचिटिलो-पेक्किपिशिगित्यत्रस्थानिवत्त्वेनेनन्तत्वादिन् हन्निति नियमेनोप-धादीर्घवारणेपि वर्तमानेसौचेतिदीर्घोनयदितत्रनेत्यनुवर्तते त-दातलुनोस्यास्तीति तलुनीतमाचष्टेणिचिक्किपितलुनइत्यादाव-नुनासिकस्येतिसर्वनामस्थानेति वादीर्घोन । बहवःशिखिनोय-स्यांनगर्य्यांसावहुशिङ्नगरीत्यत्रेनः स्त्रियामितिकम्न । एवंक-ल्याणधर्म्माणमाचष्टेकल्याणधर्म्मयति ततःक्किप्कल्याणधर्म्म तस्यसमीपमुपकल्याणधर्म्मसित्यत्रापि स्थानिवत्त्वेनानन्तत्वाद नश्चेति टच्न । एवमप्रजसमाचष्टअप्रजयति ततःक्किप्सोऽस्या-स्तीत्यप्रज्वानित्यत्रस्थानिवत्त्वेनासन्तत्वादसन्तलक्षणोविन्ने-ति । अन्यथाकृत्स्नप्रत्ययलोपेपि स्थानिवत्त्वेनतदन्तत्वात् उक्तोदाहरणेषु तेतेविध्यस्स्युरेवेति बोध्यम् । प्रत्ययस्यासा-धारणमिति । अत्रप्रमाणंद्वितीयप्रत्ययग्रहणमिति भाष्यकृतः । अन्यथा तल्लक्षणमित्येववदेदिति । तदाशयं कैयटःप्रकृतेन-स्पदप्रत्ययपदयोः पर्यायत्वेपि प्रत्यासत्तिः प्रार्थनीयस्याप्रार्थि-

तस्यैवलाभार्थेति लाघवमिति तदाशयः वस्तुतस्तुनतच्छन्दः कस्यचित्पर्य्यायइति मञ्जूषायांसिद्धान्तितम् । उदद्योतेय-त्तुपर्य्यायत्वमुक्तन्तत्तुकेचिदाहुरित्युक्त्यांमतान्तरमिति बो-ध्यम् । इतोपि लाघवमभिप्रेत्यस्थानिवत्पदानुवृत्तिरेव कार्य्ये-ति तदाशयंकौस्तुभकृतः । बहुब्रीहिलभ्यफलस्यनखभिन्नइ-त्यादेरन्यथासिद्धत्वादेवमुक्तमिति तदाशयः । नन्वेवं का-र्त्स्न्यासाधारण्ययोर्विवक्षायैद्वयोरपि प्रत्ययपदयोःसामर्थ्यंव-र्णनीयन्तच्चासम्भविलोपेस्थानिपदित्युक्तावतिप्रसङ्गस्योक्त-त्वादुभयोरप्यभावे प्रत्यासत्तेरप्युक्तयावक्तुमशक्यत्वात् तृ-तीयस्यचप्रत्ययपदस्यभगवताप्रत्याख्यानात् तथाचकोस्यभाष्य स्याशयइति चेदयम् । तावन्मात्रफलकत्वेमात्रालाघवायप्रति-पत्तिलाघवायच कृत्स्नप्रत्ययलोपइत्येवब्रूयादिति नचैवमपि प्रत्ययग्रहणसामर्थ्यादवधारणान्तर्भावेण समासेऽसाधारण्यं-लभ्यतांस्वसमानाधिकरणवर्णविशेषत्वरूपं प्रत्ययस्यप्राधान्यं दुर्ल्लभम् । तंविनापितस्यचारितार्थ्यात् । एवञ्चचित्रायांजाताच्चि-त्रे स्यादात्वनिष्ठंङीवादिविधायकत्वमेवास्यस्यान्ननियामकत्वमि-ति चेन्न । अकारान्तायेटिदादयः तदन्तंयत्प्रातिपदिकंतदन्ता-दिति तदर्थाङ्गीकारेणानल्विधावित्यनुवृत्तेर्विधिपक्षइवविशे-षणसामर्थ्यात् श्रूयमाणाकारान्तादित्यर्थाङ्गीकाराद्वातत्रास्या प्रवृत्तेः स्पष्टश्चायमन्त्यः प्रकारःप्रकृतसूत्रेकैयटे । अस्तिसिचोपृ-क्तइति सूत्रेशेखरेच नचान्त्यपक्षेसशमारज्जुरित्यत्रङीवर्थंनतु-मात्रजितिप्रत्याहारनिर्देशइति सिद्धान्तेकतिस्त्रियइत्येतद्वारणा यावश्यकत्वेनान्यत्र चात्रसामर्थ्याभावादिति वाच्यम् । नष-

डितिनिषेधेनापिकतील्यस्यसूत्तस्युत्वादऽस्तुवाश्रवणेत्यादिनिर्दे-
शेनोक्तप्राधान्यस्यलाभइति दिक् । तत्रैवेतोति तदेतियुक्त-
म् । अन्यत्रेति यङ्लुङन्तशेखरइत्यर्थः । एवंपास्यद्धीति-
वक्तव्येवेभिदीतील्युक्तिमात्रमेकदेशिनोन्यत्सर्वंसिद्धान्तिन-
इति बोध्यम् । नलुमताङ्गस्यतदुद्देश्यकमिति । तत्पूर्वत्वेन-
तदुद्देश्यकमित्यर्थः । अन्यथासुबन्तत्वेन तत्पूर्वभागश्चरा-
जनित्यस्योद्देश्यतासत्वाद् राजपुरुषेपदत्वंनस्यादिति बोध्यम् ।
संज्ञाचनेति। आद्यपक्षइति शेषःजातातिष्ठतोति। वक्ष्यमाणरी-
त्याजातेपि लुकितत्प्रवृत्त्यालुकोऽन्तरङ्गाङ्गसंज्ञानिमित्तविना-
शकत्वाभावेन तत्रकर्त्तव्यायान्तन् न्यायाप्रवृत्तेरिति भावः ।
भसंज्ञायास्तुलुकिकृतेन लुमतेतिनिषेधादप्रवृत्त्यातद्रूपान्तरङ्ग-
निमित्तविनाशकत्वं लुकोस्त्येवेति तत्रकर्त्तव्यायांतन्न्यायाप्र-
वृत्तिरिति बोध्यम् । तृज्वत्वमिति । जातन्तिष्ठतोति भावः ।
अङ्गसंज्ञायांनलुमतेत्यस्याप्रवृत्तेरेवं चलुकोऽन्तरङ्गसंज्ञानिमि-
त्तविनाशकत्वाभावादन्तरङ्गानपीति न्यायाप्रवृत्तेः पूर्वमङ्गसं-
ज्ञायां तृज्वेङोवादिरिति भावः । स्वमोर्न्नपुंसकादिति सूत्र-
इति । इत्यनुवर्त्तमानेनेतराच्छन्दसीति सूत्रइत्यर्थः । त्रेत्रयः ।
शङ्कावारणायेति । तत्रापि न्यासउक्तनिर्देशाश्रयणेतुजराया
असुङोवप्रतिपत्तिगौरवमिति भावः । ईत्वमत्रकारेति । अ-
स्यतर्थेत्यादिरादाविति फलितार्थकथनं भाष्येवकारप्रतिषेध-
इत्येवन्निरुक्तेः। आवश्यकमितोति। इदमपि सम्भावनामात्रेणे-
ति शेषः । अत्रपक्षचतुष्टयमुपलभ्यते तत्रावकारेप्रतिषेधइ-
ति वार्तिकारम्भएवज्यायानन्यथा संस्याशब्देप्रत्ययलक्षणेना-

तृणडित्यत्रेवेत्वापत्तेरित्येकः प्रत्याख्यानमेकदेश्युक्तिरिति प्रत्ययलक्षणसूत्रं च वार्तिकानारम्भेप्रकृतेऽनिष्टत्वसिद्ध्यर्थनेव स्याद्यथोत्तरंमुनीनां प्रामाण्याच्चक्किपोत्वंभवत्येव हलीत्यस्यानचोत्यर्थकत्वात् संस्थाशब्देविजेवभाष्यप्रयोगाद्द् त्वाभावइति द्वितीयःवार्तिकानारम्भणीयामल्विधाविति प्रत्ययलक्षणसूत्रेऽनुवर्तनोयमितिक्किपोत्वंनैव प्राप्नोतिदधातेर्वैतित्वेकदेश्युक्तिरेव यत्तुदृशिग्रहणादपूर्वत्वाशयकत्वंतस्यज्ञोर्यंतेर्युरित्यस्यैवेत्याहुरिति तन्नसम्यगेवमपि जनसनेति सूत्रेधियौधयइत्यत्रेयङ्त्वस्याभीयासिद्धत्वन्तुनभवति क्विपोत्वंविभक्तावियङितिव्याश्रयत्वादिति भाष्योक्तेरसङ्गत्यापत्तेरिति तृतीयः ईत्वविषयेक्किवेवनेतिचतुर्थः तस्यायंभावः । एवंसतिवार्तिकारस्यप्रत्याख्यानयोः फलैक्यंसंपद्यतअनल्विधावित्यस्यस्वरितत्वप्रतिज्ञांमण्डूकानुवृत्तिंविनैव प्रत्ययलक्षणसूत्रेनियमार्थत्वं चसंस्थाशब्देचक्किपमङ्गीकृत्यवार्तिकारंभावश्यकत्वकल्पनांभाष्यकारप्रयोगादीत्वाभावकल्पनांचापेक्ष्यस्थः कच्चेति सूत्रकृत्स्वरितत्वप्रतिज्ञाकं विच्पदमेवानुवर्ततेनाकॢप्तस्वरितत्वप्रतिज्ञाकं क्किप्यपीयमेव कल्पनायुक्तातत्रभाष्येक्किप्यपीदन्तु वार्तिकानुसारिणइति युक्तश्चायंक्विठविधायकेदृशिग्रहणेनकित्वप्रयुक्तकार्य्यादर्शनेस्सनदृश्यतइत्यस्यैव युक्तत्वादिति बोध्यम्। स्पष्टञ्चेदं सर्व्वंघुमेति सूत्रेभाष्यप्रदीपोद्द्योतेषु इति दिक् । पर्य्यालोचनयासिद्धादिति । इदंक्त्वनिवर्थपाश्चात्वर्थञ्चोक्तंशेषन्तु वार्तिकंशेषउपलभ्यतएवेति बोध्यम् । ह्रस्वइति कपन्तेति शेषः । यूस्त्र्याख्यौनदी । तदन्तयवेलक्षणेति । शत्रन्त-

स्याङ्गसंज्ञायानिमित्तभूतेनव्यवयवइत्यर्थः । तेनतुदन्गौरो-त्यत्रनदोषः नन्वेवमपि शत्रन्तान्मतुपित्तुदद्वतीत्यत्रदोषएव-मतुपस्तदङ्गसंज्ञानिमित्तत्वान्नव्यवयवत्वाच्चनचेष्टापत्तिः वर्णसं-ज्ञापक्षेऽप्राप्तिरिति चेन्नशीसाहचर्य्येणेकारप्रश्लेषेणवाईकार-रूपेनव्यवयवइत्यर्थाङ्गीकारात् नन्वेवमपि तुदतेहितं तुदतीय-न्तमततितुदतीयात् तमाचष्टइति णिच्चिक्विपिटिलोपेयलो-पेतुदतोः ततोमतुपिङीपितुदतीमतीत्यत्रदोषएवेति चेन्न । व-र्णसंज्ञापक्षेपि तत्रप्राप्त्याइष्टापत्तेः।अतएवशोङ्गोरिति नास्-त्रियदितत्रनुमोनिष्टत्वेमानमुपलभ्यते । तदाचरमावयवेलक्ष-णेति बोध्यम् । आख्याग्रहणादिति । विच्पक्षइदंकपक्षेतुख्य-ग्रहणेतियुक्तम् । अनभिधायकत्वेति । येन प्रवृत्तिनिमित्तेन लिङ्गान्तरावैशिष्टेन स्वेनार्थोभिधीयते यत्प्रकारकबोधजनने-च्छयोच्चरितं तत्वंयदास्वस्यतदानित्यस्त्रीत्वमितियावत् यस्यनदो संज्ञाचिकीर्षितासस्वपदार्थइति बोध्यम् । त्रिलिङ्गे नेति ।नपुंस-केह्रस्वात्प्राक्समानाकारत्वमिति बोध्यम् । सयइति । अनुवर्त-त्तइति । सुप्तिङिति सूत्रादिति शेषः । अयचीति । प्रेत्य। नेति। प्रसज्येति । इदञ्चासर्व्वनामस्थानइत्यत्रत्यनञसम्बन्धमभि-इदमपि निषेधार्थकोऽशब्दमभिप्रेत्यस्वादिषु पूर्व्वपदम्भवति ततोयजादावसर्व्वनामस्थानेपरेमध्येचेत्सुबन्तन्तदपि पदम्भव-तीति वाक्यद्वयेनसुवाचेत्यादिसिद्धौ वाक्यत्रयकल्पनाचिन्त्या। एवञ्चसौपरेफलभेदोनेत्यपरमनुकूलंशम्भवतीत्यादौ शमुपप-दपूर्व्वसुबन्तभूशब्दादाचारक्विबन्ताल्लटितिपि शपिगुणेपू-र्व्वरूपमपि नयजादीत्यादिशब्दस्यप्रकारत्वाच्चित्वेन शपोपि

यञादित्वादिति। एवं सजनतीत्यादिबोध्यम्। गोतोणित् । वि-
परिणम्यतइति । णित्कार्य्यमिति । एवञ्चणिच्छब्दस्यणिइ-
तिलक्षणेत्यर्थः । वस्तुतःसप्तम्यन्तमेवास्तुगोतइति तुषष्ठ्यन्तं
णिच्छब्दस्यणिन्निमित्तककार्य्येलक्षणा। एवञ्चसर्व्वनामस्थाने-
परेगोशब्दस्यणिन्निमित्तककार्य्यम्भवतीत्यर्थइतीदंचिन्त्यम् ।
नदोषइति। हेचित्रगवित्यत्रनदोषोविहितविशेषणस्य वक्ष्यमा-
णत्वात् । इत्याहुरिति । गामित्यत्रवृद्धिस्तुन । इत्यजन्ताःपु-
ल्लिङ्गाः । रमेतिक्रीडार्थकरमधातोः पचाद्यचिसाधुः। स्वादय-
इति। आबन्तत्वायपूर्व्वान्तवद्भावस्यावश्यकत्वेन ततएवस्वादि
सिद्धिरिति भावः । एतेन वाचेत्यस्यसिद्ध्यर्थंलिङ्गविशिष्टप-
रिभाषासञ्चारस्यावश्यकत्वात् प्रकृतेपि तयैवसिद्धौ पूर्व्वान्त-
वद्भावोद्भावनेचिन्त्यंप्रयोजनमित्यपास्तम् । प्रतिपदोक्तत्वेने-
ति । नाप्राप्तलोपेऽस्यबाधकत्वादित्यर्थः । एतेनलोपेप्याप-
इति प्रतिपदोक्तत्वेन तत्वाल्लोपस्येत्यपास्तम् । अनित्यत्वा-
दिति । भाष्योक्तपरिगणनस्यतुपरिभाषास्वीकारेतात्पर्य्यंन-
तुपरिगणनेन्नहिभिक्षुकाः सन्तोति दृष्टान्तेनतथैवलाभात् ।
ध्वनितञ्चेदमितोन्यत्राप्रवृत्तिरिति वदतेतोन्यत्रेत्यत्ररुत्वउत्वे-
गुणएङः पदान्तादिति कुर्व्वताभाष्यकारेण । अन्यथाऽकार-
निमित्तकत्वेनोत्वस्य गुणद्वारापूर्वरूपाद्वाराच्च तद्विघातकत्वात्त-
दसङ्गतिः स्पष्टैव । सर्व्वनाम्नःस्या । असम्भवादिति । ट्वुटु-
लोःतुद्वेत्यादौतु तयोरावृत्तिस्तत्सामर्थ्याच्च तत्रोद्देश्यत्वंयुष्म-
द्युपपदइत्यत्रतुतिङ्ग्रहणंतत्स्थानिकलकारेलाक्षणिकम् । आ-
चोढस्वश्चेति । ह्रदञ्च ह्रस्वपदश्रुत्याऽच्परिभाषोपस्थित्या-

आपइत्यावन्तात्सर्वनाम्नः परस्यङितः स्याडचश्च ह्रस्वःस-चालोऽन्त्यपरिभाषयाऽन्त्यस्यैव स्यात्तत्फलितार्थकथनमापोह्र-स्वइति। एतेनापइत्यस्यावृत्तिपरंलापनञ्चित्यम्। आहुरिति। विभक्तौलिङ्गविशिष्टेति निषेधःस्यादेवतस्यानडुहीत्यत्रामन-डुहःस्त्रियामिति वार्तिकेनाम् विकल्पेऽभावार्थं विभक्तिनिष्ठ-निमित्तताककार्य्यइत्यर्थआवश्यकइति। अत्रापि तेनैव निषेधः कुतोनस्यादिति चिन्त्यमेतत्। उद्देश्यत्वविधेयत्वप्रतीत्ये-ति। एवञ्चपर्वतो वह्निमानित्यादाविवोद्देश्यस्यविशेष्यत्वेन/वि-धेयस्यप्रकारतास्यादितोदञ्चिन्त्यम्। एवञ्च पूर्वाशब्द-स्यपूर्वात्वप्रकारकज्ञानलक्षणयापूर्वात्वप्रकारकज्ञानविशेष्या-साप्रसिद्धोत्तरेत्यैव परमप्राचीनोक्तमुत्तरपूर्वेत्येवयुक्तम्। नवि-धौपरशब्दार्थः इत्यपिचिन्त्यम्। आयुर्वैघृतमित्यादौ घृत-मायुर्जनकमित्यर्थेनविधेयायुः शब्दस्यलक्षणयातस्यदुष्टत्वात्। सिंहोमाणवकइत्यादौ विधेयसिंहशब्दस्यसिंहसदृशेलक्षणायाः स्वयमुक्तेश्च। नियमेति। अत्रह्यक्षरमित्यस्यार्थंशब्दस्यविशे-षणत्वेनोपपत्तौ नियमपरतयाव्याख्यानंक्लिष्टम्। भवत्येवेति। पुनष्टाप्तुनभवतिवहिरङ्गासिद्धत्वात्। उक्तमिति। एवञ्चे न्नि र्जरसेनिर्जरसइत्येव भवितव्यमिति भाष्यविरोधात् पूर्ववि-प्रतिषेधेन जरसइत्येवोचितमिति निर्जरशब्दस्थशेखरश्चिन्त्य-एवेति। स्वंश्रूयमाणेति। स्वमादेशइति वक्तुंयुक्तम्। अकारा-श्रयमाकारत्वमित्यर्थेपौनरुक्त्यं स्यात्। वक्ष्यमाणरीत्येति। साक्षपरम्परासम्बन्धेन स्थानिनिष्ठधर्मस्यनातिदेशइत्येवंरूपा। एवञ्चेद्धात्वन्तयकोस्तु नित्यंसुनयिकात्रनीधातोगु णअयादे-

शेधातुत्वं शित्रीऽर्य्यइत्यत्रपूर्वरूपम् । आरतुःआरुरित्यादा-वसंयोगाल्लिट्किदिति कित्वन्नस्यात् । मध्येकिंचित्कार्य्याभा-वेन तद्धर्म्मानतिदेशादितीदमपि चिन्त्यमेवभावश्चेति पाठः । लौकिकमिति । तच्च वाक्यार्थवत्वेसतिसार्थविशिष्टार्थान्तर-बोधकत्वरूपंनेतरविशेषणत्वरूपंटापोद्योतकत्वेन सर्व्वत्रोप-सर्ज्जनस्यैव सत्वादिदश्चसमासएव वाक्येतुन तेनसर्वस्मैपुरु-षायेत्यादौ नदोषः।स्वासम्भवादिति । तन्मात्रलौकिकोपस-र्ज्जनत्वन्तु स्त्रीप्रत्ययान्तघटितत्वाद् बोध्यम् । यद्यप्येतादृशो-पसर्जनत्वयत्रोदाहरणेन तत्र तदादिनियमप्रसक्तिः यत्रप्रस-क्तिर्नतत्रोपसर्जनत्वं तथापि परिभाषायाअनुपसर्ज्जनस्त्रीप्रत्य-योपस्थापकस्त्रीप्रत्ययेतदादिनियमोनेत्यर्थात् । नन्वस्यस्त्रीत्व-र्थेऽशब्दात् ङीषियस्येति चेतिलोपइति तस्यनिर्शब्देनसमा-सएकविभक्तिचेति प्रत्ययमात्रस्यशास्त्रीयोपसर्ज्जनत्वसम्भवइ-ति न च फलाभावो ह्रस्वस्तु स्वमतेस्यादेवोपसर्ज्जनस्त्रीप्रत्यया-न्तप्रातिपदिकादिति वाच्यम् । स्त्रीभ्योढगितिनिरिशब्दस्य स्त्रीप्रत्ययान्तत्वेढकिआदिवृद्धिरिति चेन्न । स्त्रीभ्योढगित्य-स्यस्त्रीत्वरूपार्थवाचकाड्ढगित्यर्थस्यैव वक्ष्यमाणत्वेन निरिरि-त्यस्यतत्वाभावात्तदप्राप्तेः वस्तुतस्तु कुम्भकारेयोप्यापद्ये तस्त्री भ्योढगितिढोऽत्रप्राप्नोतीति भाष्यविरोधाच्चिन्त्यमिदं तत्रशे-खरोपि चिन्त्यएवमातृष्वसेयइत्यादितु पृषोदरादित्वाद्बोध्यम्। नतेनेति । तेनस्त्रीप्रत्ययांतेनकिन्तु स्त्रीप्रत्ययएवतदादिनि-यमःप्राप्तइति तत्रैवनिषेधउचितइति भावः । वस्तुतःशास्त्री-योपसर्ज्जनत्वमेव स्त्रीप्रत्ययान्तइति बोध्यम् । तत्र तदादि-

नियमप्रसक्तिस्तु तवानुपसर्जनस्त्रीप्रत्ययोपस्थापकस्त्रीप्रत्ययइवानुपसर्जनस्त्रीप्रत्ययान्तघटकस्त्रीप्रत्ययोपस्थाप्यस्त्रीप्रत्ययांते बोध्या। अतएव कृत्रिमाकृत्रिमन्यायस्यनबाधः प्रत्याश्रयणञ्च। अतएवार्द्धन्नपुंसकमित्येकदेशिसमासप्रत्याख्यानपरभाष्येणफलभेदश्च नतत्रार्द्धपिप्पलीत्यादौ कर्मधारयाश्रयणेन भाष्यकृताप्रत्याख्यातं तत्रारम्भेलौकिकोपसर्ज्जनत्वेन ह्रस्वोनप्रत्याख्यानेत्वनुपसर्ज्जनत्वाद्ध्रस्वः स्यादेवेति ममतुपूर्व्वमिदानीञ्च शास्त्रीयोपसर्ज्जनत्वाभावाद् ह्रस्वइति। निशायामिति हलन्ताट्टापोनभिधानेतु बहुयज्वायामित्यादि बोध्यम्। सत्वादिति। एवन्त्वतिखट्वायेत्यत्रह्रस्वात्पूर्वमाकारसत्वेन कथं तस्यलाक्षणिकत्वम्। किञ्चतत्तच्छब्दानुवादेन विहितत्वरूपप्रतिपदोक्तत्वस्यसत्वेन कथं परिभाषयावारणमिति चिन्त्यमेतत् तस्मादतिखट्वायेत्यत्रयकारमुपजीव्यजायमानोदीर्घो यकारसन्निपातविघातकयाटन्नप्रवर्त्तयतीति सन्निपातपरिभाषयावारणं बोध्यम्। मानाभावादिति। अत्रयद्वक्तव्यन्तदुक्तं प्राक्। व्रश्च। विश्वागित्येवेत्याहुरिति। एवंचेद् भ्राशोविश्वाडिति भ्राजोविश्वागिति रूपद्वयसिद्धौ भ्राजिग्रहणं व्यर्थंकिञ्चैकानुबन्धकराजिसाहचर्य्यादेकानुबन्धकभ्राजेरेव कुतोनग्रहणं तथाच फणादेःषत्वन्नस्यादिति साहचर्य्यंचिन्त्यम्। अविचार्य्येइति तुच्छेदइति तुनसम्यगविचारेयुक्तिस्तुपूर्वोक्तैव। ङितिह्रस्वश्चद्वयमिति। अतएवसूत्रेच आद्यइत्यस्यतत्रेत्यादिः। ह्रस्वयोरप्राप्तइति। न च यूस्त्र्याख्येत्यत्रह्रस्वग्रहणपक्षस्यापि भाष्यउक्तत्वात्कथमप्राप्तिरिति वाच्यम्। तत्रैवपक्षेशेषपद-

मकृत्वापरत्वात् घिसंज्ञायाबाधइत्यस्याप्युक्तत्वेनादोषात् । निषेधादिति । न च दीर्घवाक्यद्वयङितिनिवृत्त्योभयत्रविभाषात्वमेवकुतोनेति वाच्यम् भावमात्रतात्पर्य्यलाघवानुरोधेनाप्राप्तविभाषात्वस्यैवौचित्यादुभयत्रकल्पनातएककल्पनेलाघवस्यवाक्ययोः साम्यस्यचसत्वात् । ह्रस्वांशेति । इष्वाद्युपक्रमानुरोधादेकदेशावृत्तेरयुक्तत्वात् । भाष्येह्रस्वघटितवाक्येस्त्र्याख्यावित्यस्य कण्ठतउक्तत्वाच्चाह । यद्वेतिङिदाक्षिप्तेति । इदं प्राचीनवासनयावस्तुतः प्रत्ययग्रहणपरिभाषयातल्लाभेनेदं प्रत्ययमात्रग्रहणमिति चेन्न वामीति साहचर्य्येणतन्मात्रग्रहणात् । अतएव हेगौरिशेतेऽयमित्यादौनदीत्वविकल्पोनात्रङितिह्रस्वश्चेति सूत्रविषये। अन्वाख्यायकइति। अस्त्विदमपूर्वमिति भावः। अतएवतदाचार्य्यैःसुहृद्भूत्वान्वछइत्युक्तम् ह्रस्वौह्रस्ववर्णाद्यन्तौ शब्दावियङादिस्थानेवर्णाद्यन्तौचताविर्त्यथः । प्रवृत्तौप्रवृत्तिरर्थान्तरसंक्रान्तिः तस्यांसत्यामिति कैयटोनतुपुंवाचकेति यद्यपीदन्नभाष्येतथापि नपुंसकेनुमाबाधात्फलति। वार्तिकइति। इत्यर्थकवार्तिकव्याख्यानावसरइत्यर्थः । ङिदाक्षिप्तेति । यतोङिद्विहितः तदादित्वाभावादित्युद्द्योतोक्तेरुक्तएवाशयोऽस्य मुख्योऽर्थान्तरसंक्रमोऽस्यैवेति भावः । दर्शितइति । ह्रस्वेति वार्तिकव्याख्यानभाष्यइति भावः । अजानतइति । अन्यथा ह्रस्वावित्यस्यनियमार्थतान्नवदेदुभयलिङ्गादौ विध्यर्थत्वसम्भवात् । एकदेशीत्युक्तहेतोगौरवाच्चास्य तत्वमिति भावः । तदन्तस्यवेति। तेनकटप्रुवेब्राह्मण्याइत्यत्रननदीत्वं श्रियैब्राह्मण्याइत्यत्रनदीसंज्ञाऽत-

एवप्रकृतौच प्राक्चप्रवृत्तेऽस्त्रीवचनावेवेति भाष्यउक्तमिति भावः । तदलाभादिति । स्त्रीवचनाविरयेवभाष्योक्तैरुक्तप्रयोगाणामनभिधानाच्च । अतएवोक्तवार्तिकंचद्वयरहितम् । अपरआहेत्यादिनापठित्वाक्तन्मेजन्तश्चानिकारोकारप्रकृतिरनन्यप्रकृतिरिति वा वक्तव्यमित्यादाविवन्यायविचारोनकृतोभाष्यकृताकैयटेनाप्युक्तञ्च शब्दोत्रतन्मतइति पूर्वस्माद्विशेषो नहिप्राक्प्रवृत्तेःकिञ्चिदनिष्टमापद्यते ब्राह्मण्याइति नसिद्धेदन्तेतदनिवेशेऽत्यशेनयअतिषयेब्राह्मण्याइति नसिद्धेदयमेव चकारमपठतोवार्तिककारस्यापरस्यनहिप्राक्प्रवृत्तेः किञ्चिदनिष्टमापद्यतइति कैयटस्यचाशयोनित्यस्त्रीवचनस्यस्त्रीवचनत्वाव्यभिचारइति।आद्यवाक्येनित्यस्त्रीत्वनिवेशादेवोपक्रमेनिषेधपरतयाव्याख्यानेनफलभेदः तदुक्तनित्यस्त्रीत्वार्थमजानतएकदेश्युक्तिस्तुसाहसमात्रम् । साधकान्तरभाष्याभावाद् विपरीतस्यापि वक्तुंशक्यत्वाच्च । अतिश्रियअतिभ्रुवइत्यनयोस्तदन्तविधिनोपपत्तेश्च । अन्तेतन्निवेशादेवयुइति ह्रस्वयोर्ग्रहणमिति पक्षेह्रस्वश्चेत्यस्यनियमार्थतासिद्धान्तिताऽतएवाकडारसूत्रएतत्सूत्रारम्भसामर्थ्यान्नदीसंज्ञामाश्रित्यशेषग्रहणन्नकर्तव्यमित्युक्तम् । अन्यथागत्रांपत्त्यैस्त्रियाइत्यादौ चारितार्थ्यात् सामर्थ्योक्तिरसङ्गतैवस्यात् नित्यस्त्रीत्वञ्च वार्तिककृत्सम्मतम् । यत्तुदेवेति । शकटयेधेनवइति स्वरसतोलुबन्तविषयकमपि भाष्यंसुयोजम् । प्रतिषेधपरतयाव्याख्यानस्यैकदेश्युक्तित्वन्तुनैवयुक्तम् । अवयवविषयत्वात् सिद्धमिति चेदियङुवङ्स्थानिप्रतिषेधेयण् स्थानिप्रतिषेधोऽव-

यत्रस्येयङुवङ्स्थानत्वादिति वार्तिकप्रतिषेधइत्युक्तेरिति दिगित्याहुः । ङितिह्रस्वश्चेति । सूत्रस्थव्याख्योत्तरंङिति ह्रस्वश्च यत्तुवाचिह्रस्वश्चेत्येव सूत्रेणसिद्धेङिति ह्रस्वश्चवाप्नोति सूत्रद्वयंव्यर्थमिति तत्सामर्थ्यात्सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थमिति तन्न यदागमपरिभाषायाः स्वमतेवर्णग्रहणेपि प्रवृत्त्यात्राजादित्वातिदेशादित्यतिदेशेन विघाताभावेपि वस्तुतस्तद्विघातसत्वान् नच प्रत्ययग्रहणपरिभाषयातदादेरित्यस्योपस्थित्यैङ्ह्रस्वादित्यादाविवाङ्गलाभइति वाच्यम् । नेदंप्रत्ययमात्रग्रहणमिति सूत्रान्तरसाहचर्यन्तु स्वयमेवान्यत्रखण्डितम् । किञ्चोक्तयुक्त्यातदादेरित्यस्यालाभेप्यत्रसप्तम्यन्तप्रत्ययस्याश्रयणेपि न षष्ठ्यन्ततदादिरित्यस्योपस्थितिस्स्यात्तेनच ह्रस्वपदेनसामानाधिकरण्यन्नैव सम्भवतिस्पष्टम् चेदंपरंच तत्र पञ्चम्यन्ततेत्यादिनापरिभाषेन्दुशेखरेत्वन्मते वार्तिकानुत्थानञ्च किञ्चाङ्गविशेषणत्वेकटप्रुवेब्राह्मण्याइत्यस्यपरित्यागः किमर्थंकृतइति शङ्कादुरुद्धराच प्रथमलिङ्गग्रहणंचेत्यस्यखरकुट्यायिति वचनंसङ्गच्छते । विभक्तिविपरिणामेति । शब्दाधिकारेणयुइति ह्रस्वयोरपिसम्भवात् तयोर्ग्रहणस्यविभक्तिविपरिणामेह्रस्वश्चेत्यत्रान्वयः । दिगिति । तिसृचतसृत्यत्वविभक्तिविपरिणामेनोभयानुवृत्त्यात्रिचतुः स्थानिकयोस्तिसृचतसोरादेशोभवतीत्यनेनकृतइति स्पष्टार्थमितिदिगर्थः । एतेनेति पूर्वविप्रतिषेधकरणेनेत्यर्थः । त्रयादेशइति । तत्रादेशेदीर्घेतदसङ्गतिरिति भावः । उत्तरपदत्वाभावादिति । ऋकारान्तोत्तरपदकबहुव्रीहावित्यर्थः ।एतेन बहुमातृकइत्यादितद्दृा-

हरणेषु समासान्ताअलौकिकप्रक्रियावाक्येबहुजस्मातृजस्इ-
त्यत्रैव प्रवृत्त्यातत्रकारान्तोत्तरपदत्वाभावादित्यपास्तम् । सू-
त्रान्तरसामर्थ्येनपूर्व्वोक्तार्थाङ्गीकारात् । नेयङुवङ्स्थाना ।
बाधकाविषयइति । इदंच्च स्वरूपकथनं नत्वपूर्व्वंयणउवङो-
पवादत्वात्तस्यैव प्रवृत्तेः। तयोरिति । अत्रस्थानिनोऽधिकरणत्व-
विवक्षयासप्तमी।व्याख्यानादिति । सूत्रारम्भसामर्थ्यादित्यर्थः।
हेश्रीरित्यादाविति इयङुवङोःक्वापिस्थित्यभावात् । नदीकार्य्या
श्रयेऽङ्गइति । सुधीत्यत्रसुसुधीसुइति स्थितेसमासान्तस्यालौ-
किकप्रक्रियावाक्येप्रवृत्त्यातत्रसुबन्तेनदीकार्य्याश्रयेऽङ्गइयङुव-
ङोःस्थितिः क्वापिनदृष्टाइति तत्र निषेधाभावेयूस्त्र्याख्यावि-
त्यनेननदीसंज्ञायां कप्स्यात् । किञ्चनैकत्रगृहेकाकदर्शनअन्य
त्रगृहेकाकवन्तोदेवदन्तस्यगृहाइति भवतीत्युपलक्षणताप्यश-
क्येति चिन्त्यमेतत् । तस्माद्यदर्थकयादृशधर्मावच्छिन्नइयङु-
वङोःस्थितिर्दृष्टातदर्थकतद्रूपावच्छिन्नस्येत्यादिशब्दार्थोवक्तुं
युक्तइत्यलम् । सीतापहारेति । अत्रकृद्योगेषष्ठीसमासस्यनिषे-
धात् सीतायाअपहारेति वक्तुंयुक्तम् । विधिनेति । विधिना-
त्वयाहापितःत्याजितः किं कुर्व्वोंहेसुभ्रु त्वं क्वासीत्येवंसबहु-
विललापेति योजनानत्याजितः सइतित्वयेत्यस्यानन्वयापत्तेः।
भावप्रकाशेतुविधिनात्वयाहापितःत्याजितः सलक्ष्मणः हेसु-
भ्रू त्वंक्वासीत्येवं बहुविललापेत्यर्थ इत्युक्तम् । तत्रलक्ष्म-
णस्य विलापेकर्तृत्वेननान्वयः रामविलापोऽयमिति स्वपरग्र-
न्थविरोधात् किन्त्वयमप्येकोविलापप्रकारइति ज्ञेयम् । पर-
न्तुतच्छब्देनलक्ष्मणपरामर्शोदुर्लभः तस्याप्रकान्तत्वात् । राम-

इत्यस्यैवविलापेकर्तृत्वेनान्वयित्वस्यैव स्वरसतःप्रतीतेश्च पर-न्त्वयमर्थोनप्रकरणस्यानुगुणोनापि तत्पदव्याख्यायाः तथाहि षष्ठसर्गएकादशंभट्टिपद्यम् । आःकष्टंवतहिच्चित्रंहूंमातर्दैवता-निधिक् हापितःक्वासिहेसुभ्रु वह्वेवं विललापसःशोकेनाक्रान्त मनाविकल्पंनादआइतिपीडायांत्वापिवियोगात्पीडितआइत्याह। स्मद्वियोगमात्रात्पिताप्राणांस्त्यक्तवानित्याह । कष्टंकृच्छ्रमि-ति भर्तृमरणादस्मद्वियोगाच्च मातुःकावस्थेत्यभिप्रायेणाह । वतेतिवतशब्दःखेदेसौमित्रिरपि सोतयाशयितइति विस्मितः होत्याह । हिविस्मयेयदिनाममूढतयापि शयितःसीतयात-थापि सौमित्रिणाविदुषासतापि कथं तादृशशापोदत्तइत्य-भिप्रायेणाहचित्रमिति । चित्रमाश्चर्यंयदेवं विधमनर्थञ्जात-न्तत् कैकयीप्रभवमिति क्रुध्यन्हूंमातइत्याह। हूंशब्दःक्रोध-अथवा सर्व्वमेवेदं दैवदत्तविचेष्टितमिति न च तेषुमयानुचि-तमित्यभिप्रायेणधिग् दैवतानीत्याह । धिक् कुत्सायांप्राणां-स्त्यक्तवन्तमपि पितरंनपुनरहंद्रक्ष्यामीत्यभिप्रायेणाह । हा-पितःक्वद्रष्टव्योऽसिहाशोकेहेसुभ्रु सीतेक्वासीत्यादितद्व्याख्या-नञ्चेति बोध्यम् । समुदायस्यचेति । इदञ्चपदान्तरम्बिना-पि स्त्रियाम्वर्त्तमानत्वंनित्यस्त्रीत्वमिति वृत्तिकारमतमनुसृ-त्योक्तम् । कैयटमतेतुशोभनेभ्रुवौयस्याइति बहुव्रीहिःशोभ-नंभ्रमतीति तत्पुरुषस्यवानित्यस्त्रीत्वाभावान्नदीत्वप्राप्तिरेवने-ति बोध्यम् । भावप्रकाशेतुजयमङ्गलादौ भ्रुशब्दादप्राणिजा तेश्चेत्यूङितदन्तेन समासउपसर्ज्जनह्रस्वेकृतेपि स्वभावान्मनु-ष्यजातिवचनत्वेन पुनरूङुतइत्यूङिपूर्वान्तत्वेन प्रातिपदिक-

त्वेसतिसम्बुद्धौ ह्रस्वत्वम् । ऊङभावेतुदीर्घत्वमित्युक्तम् । ऊङ्चगमादीनामिति व्युत्पादितस्यक्रियाशब्दत्वाज्जातिवाचकत्वाभावे नोङ्सम्भवत्यव्युत्पन्नस्योङ्प्रत्ययान्तस्यवा शुद्धरूढस्य प्राण्यङ्गवाचकस्यतुजातिवाचकत्वादूङ्भवति । तथाच धातुत्वाभावादुवङभावेसवर्णदीर्घेश्च इति श्च ग्रहणेनतुनोवङ् तत्रधातुसाहचर्य्येणतस्यापि धातुसंज्ञकस्यैवग्रहणात् । अतएव कैयटेतत्प्रत्याख्यातं कप्तुनसमासान्तविधेरनित्यत्वात् । क्विबन्तप्राण्यङ्गयोगरूढिस्वीकारादमरेश्च वौस्त्रियामिति प्राण्यङ्गरुवप्युपपन्नः तत्राप्यूङ्तुनाजातिपर्य्युदासेन शुद्धरूढेभ्यएवतदुत्पत्तेरिति ॥ इत्यजन्ताःस्त्रीलिङ्गाः ॥ अद्ड्डतरादिभ्य इति । एतद्भाष्यप्रवृत्तेरिति । एवञ्चेद्यत्रारम्भप्रत्याख्यानयोः फलभेदेसूत्रानभिधानं किमर्थंक्रियतेफलान्तरसूचनायैव तद्भाष्यप्रवृत्तेरित्यस्यवक्तुंशक्यत्वात् । वस्तुतः कर्ताधर्तेत्यादौ सुनिमित्तानङिसन्निपातपरिभाषाविरोधात् सुलोपेनस्यादिति तदर्थंविभक्तित्वेपि तदनित्यत्वंज्ञापनीयमेवात्रापि विभक्तिलोपेतदनित्यत्वान्नदोषइति चिन्त्यमेतत् । विहितविशेषणेति। यदितुप्राचीनमतेषडर्थगतसंख्याभिधायित्वरूपम्विहितत्वमित्युच्यते तदातेषामपिविरोधः। सान्तमहतः संयोगविशेषणमिति । नन्वेवंहंसावित्यत्रैकादेशेजातेहंसइति सान्तसंयोगस्यसर्वनामस्थानऔपरकत्वाद्दीर्घः स्यादन्तवत्वेनाकारान्तत्वन्तुनतादव्रूप्यानतिदेशात् । सर्व्वनामस्थानपरकं सान्तसंयोगान्तंयदङ्गमित्यर्थेन सान्तत्वाभावान्नभवतीति यद्वाऽन्त्यसदेशस्येति नदोषइति । ननु परिभाषेन्दुशेखरइयञ्चोभयो-

युंगपत्प्राप्तावेवेत्युक्तम् । अत्रतुनोभयोर्युगपत्प्राप्तिरिति चेन्न यस्यकस्यचिल्लक्ष्येयुगपत्प्राप्तिरस्तितस्यैकत्राप्राप्तावपि भवतीत्यर्थाच्छिरांसीत्यत्रोभयोः प्राप्तिरस्तिहंसशिरांसीत्यत्रान्त्यस्यैवेतिनदोषः । ह्रस्वोनपुंसके । अजन्तस्यति । ननु वारिणीत्यत्रह्रस्वःस्यात्तद्वारणायप्रातिपदिकग्रहणमिति वाच्यम् । ह्रस्वौकर्त्तव्ये दोघकरणवैयर्थ्येन ह्रस्वाभावज्ञापनात् । ननु ह्रस्वान्तेशिसर्व्वनामस्थानमित्यनेन सर्व्वनामस्थानसंज्ञायांज्ञानइत्यत्रनपुंसकस्यतिनुम् स्यादिति चेन्न । सुडनपुंसकस्येति सूत्रेऽनपुंसकग्रहणंनकर्तव्यं सर्व्वनामस्थानमिति नियमार्थंनपुंसकात्परंइयेतदेवसर्व्वनामस्थानसं[illegible] नान्यदितिनियमेनसिद्धावनपुंसकग्रहणसामर्थ्याज्जस्शस्सम्ब[illegible]ग्रहणमिति ज्ञापनेनादोषात्।स[illegible]नहं[illegible]ानेति । अन्तवद्भावात्प्राप्तसत्त्वप्रधानेत्यर्थः । तेनकाण्डइत्यत्रपूर्व्वान्तवत्वेन सत्वप्रधानत्वान्नदोषः । तदवस्थैवेति शङ्कानात्रह्रस्वइति ननुकाण्डइत्यत्रपर्जन्यवल्लक्षणप्रवृत्त्यापूर्व्वंह्रस्वेततएकादेशेलक्ष्येलक्षणस्येति न्यायेननपुनर्ह्रस्वप्राप्तिरेवेति चेन्न । भाष्यप्रामाण्येननपुंसकघटकवर्णैकादेशभिन्नेलक्ष्येलक्षणस्य सकृदेवप्रवृत्तेरित्यर्थादतएवज्ञानेभ्यइत्यत्रनदोषः । अन्यथा नपुंसकाजन्तप्रातिपदिकत्वाद्ध्रस्वः स्यात् । बहिरङ्गपरिभाषयावारणम्वा। एवञ्चादसोसेर्दादुदोमइत्यत्रत्यशेखरोपि चिन्त्यएवेति बोध्यम् । स्थानिवत्सूत्रस्थभाष्यविरोधोपि न तत्रलक्षणान्तरेणपुनःप्राप्तेः।प्राधान्यमिति। तत्वंचात्रप्रकारतानाश्रयत्वं समानानुपूर्वीकइति ।अन्यथाघनरसेऽम्बुत्वंप्रवृत्तिनिमित्तमादायमानु-

क्तइत्यमनुशब्देपुंम्वत्वापत्तिः।नन्वेवमप्यर्थभेदेपि शब्दैकथमिति दर्शनेसर्व्वोयंप्रयासःसफलःतत्रत्वदर्शनेफलवाचकपीलुशब्देऽस्तीति पुंवत्वंदुर्व्वारमत आह । समानार्थश्चेति । तत्प्रकारबोधेच्छयोच्चरितइत्यर्थः ।एवञ्च यत्रतत्प्रकारकबोधेच्छयोच्चार्य्यंते तदासपुंवदिति सूत्रार्थइति भावः । इत्यजन्तानपुंसकलिङ्गाः। दादेद्धातोर्घः ।फलान्तराभावेति।अत्रकेचिद् दादेरित्यत्रकर्म्मधारयो धातोरित्यवयवषष्ठीधातोरवयवोयआदिर्दकारः सापञ्चमीतस्मात्परस्यघःस्यादिति वाक्यार्थोधुगित्यत्रदात्पराव्यवहितहकारासम्भवेन येननाव्यवधानन्यायेनैकव्यवायेपिघत्वम् दामलिडित्यत्रबहूनांव्यवायसत्वान्नभवति । एवमधोगित्यत्रापि नदोषइति बोध्यम् । त्वन्मतेऽधोगित्यत्रघत्वायदादेरित्यस्यावश्यकत्वात् । तत्फलान्तरंस्फुटम् । एवञ्च दादेरित्यावृत्तिर्लक्षणाचनकर्त्तव्याभवति त्वन्मतेधातोरितिव्यर्थंच कथमधोगितिशङ्काचस्वरसात्सङ्गच्छतेभाष्येतूपलक्षणमेवेत्याहुः । एकाचो।वक्तुंयुक्तमिति । भष्प्रत्याहारोपि झषस्तथोरित्यत्रैव कृतोऽतोभष्कर्त्तव्यउज्झितेत्यादिक्तान्तधातवःसेट्काएवेति । भष्प्रत्याहारएवास्तु किं झष्प्रत्याहारेणेति चिन्त्यमेतत्।अशक्तीति।शक्त्यभावेतिवक्तुंयुक्तम् । फलाभावइति । झलाद्योःस्ध्वोरित्यन्वयेन विशेषणत्वेनान्वयसम्भवेपि तयोर्झलाद्योरेवसम्भवेनानुवृत्तौ फलाभावइति भावः । एतेन झलाञ्जशोऽन्तइत्यत्रान्तपदेनैव तन्निवृत्तौस्ध्वोर्ग्रहणंव्यर्थमेवेत्यपास्तम् । ननु झलोझलीत्यत्रझल्पदं झलादिप्रत्ययपरमित्युक्तम् तत्कथमुच्यतेझलाद्योः स्ध्वोरितिस्ध्वइत्यनयोः प्रत्ययत्वाभावादिति

वाच्यम् । झल्पदस्यप्रत्ययावयवझल्परत्वस्य वक्तुं शक्यत्वेना-
प्यन्वयसम्भवात् । तह्याडिति । आदिनाड्डिद् । तेन तुल्यमिति ।
नन्वेवमलोन्त्यपरिभाषयाऽन्त्यस्य स्यात् । तत्रजातेपि तस्मि-
न्नत्वेन नदोषः । नन्वस्यभष्भावेधकारादिरेव स्यादिति चेन्न ।
धस्यविधानंव्यर्थम् तत्सामर्थ्याद्धत्वंन्नेति चेन्न । एवमपिदाम-
लिडित्यत्रढत्वेभष्भावेजातएकाज्ग्रहणसामर्थ्येनालोन्त्यपरि-
भाषाबाधेतकाररूपस्य स्यादिति बोध्यमिति । नन्वन्तस्याभा-
वेऽन्त्योपि स्यादिति चेन्न । वस्तुतोझलाञ्जश्झशीत्यतोझलामि-
त्यनुवर्त्यंव्याख्येयमिति पूर्वककारस्यापि स्यादिति बोध्यम् ।
स्पष्टैवेति । अप्रशानितिनिर्देशस्तुपदान्तेपि पदान्तप्रयोजक-
प्रत्ययइत्यर्थः । इग्यणः । हलइति । दीर्घापत्तेरिति । यदिह-
लइत्यस्याङ्गपदस्यसम्प्रसारणपदेप्रत्यासत्त्यासंप्रसारणनिमित्त-
प्रत्ययनिमित्ताङ्गस्यार्थेनदोषइत्युच्यते तदात्रनदोषइति बो-
ध्यम् । अदोषइति ननूयतुरित्यत्रवेञोवयादेशेद्वित्वसंप्रसारण-
योः वयादेशयकारस्यसंप्रसारणे प्राप्तेपश्चात्परस्यवकारेकृतेत-
स्यसंप्रसारणन्तुनवश्चास्येत्येव वादेशविधानसामर्थ्यात्संप्रसा-
रणन्नभवति । तत्रोकारेसंप्रसारणसंज्ञायां पररूपार्थमेववादेश-
विधानंस्यात् । मनतुपूर्वसूत्रात्संप्रसारणपदानुवृत्त्यापररूपस्या-
पिवकारविधानसामर्थ्याभावादिति सुधियः । किमःकः । इमइ-
त्येवकर्त्तव्यम् । त्यदादेरित्यनुवर्त्तते तेनेमन्तत्यदादेश्चादेशइ-
त्यर्थात्कुतिहोः क्वातोत्यत्राप्येवमेवेति ककारोच्चारणसामर्थ्या-
त्त्यदाद्यत्वविषयइत्युक्तावपि दोषः स्यादेवात आह । तन्म-
ध्येति नचेमोनिर्दिश्यमानत्वात्तस्यैव स्यादिति वाच्यम् । इव-

णान्तोवर्णान्तग्राहतोर्यथानिर्दिश्यमानत्वन्तथात्रापीमन्तत्यदा-
देरेवनिर्दिश्यमानत्वात्। अनाप्यकः। विभक्ताविति। अत्रवि-
भक्ताविति्त्विन्त्यप्रयोजनम्। हलिलोपः सौतुतक्ककौण्डिन्य-
न्यायेनार्यलोपबाधकः स्यादेवेति बोध्यम्। वक्तुंयुक्तमिति।
ननु लोपकरणेस्वरितोनभवति। अशकरणेत्वशःसंपूर्णस्था-
निकत्वात्स्वरितः प्रसज्येतेति चेन्न। अशोनिपातानुदात्तक-
रणेनादोषात् आहुरिति। अत्रारुचिस्तूपसर्ज्जनत्वात्पूर्वमेवा-
कचोऽप्रवृत्तौ प्रतिबन्धकस्याभावइति तदनन्तरंगौणत्वेपि प्रव-
र्त्ततएवेति बोध्यम्। आद्यन्तवदे। एतल्लब्धमेवव्यपदेशिव-
देकस्मिन्निति बोध्यम्। बाधकाबाधितेति। ननु कृताकृतप्र-
सङ्गमात्रेणैवनित्यत्वमस्तुमास्तुचेदम्। अस्मायित्यत्रस्मैपुनःप्र-
सङ्गविज्ञानात्स्यादिति चेन्न। इदमएइति स्थितेत्यदाद्यत्वापे-
क्षयानित्यत्वादनादेशापत्तेः। वस्तुतस्त्वन्तरङ्गत्वादुपजनिष्यमा
णेति न्यायान्नादेशः नास्त्येवेदंफलमिति बोद्धव्यम्। अन्या-
र्थतापत्तेरिति। सामर्थ्यादकारस्यैव स्यादिति तदर्थमेवकृतो-
नतत् स्यादिति भावः। पर्युदासेति। प्रसज्यप्रतिषेधेतु-
शास्त्रीयत्वात्प्रसज्यलक्षणेननिषेधः स्यादिति भावः। जञो-
र्ज्ञः। ध्वनेरिति। ध्वन्यनुवादकत्वंशब्दस्य बाधितमत आह।
लिपीति। नलोपःसुप्। सर्व्वविभक्त्यन्तइति। सम्बन्धस्यसा-
मान्यषष्ठ्यासमासोत्वकर्तुमुचितः। कर्म्मसाधनइति। एवञ्च
विधिशब्दस्यावृत्तिरिति यदितु सुप्शब्दस्य सुप्सदृशेलक्षणा
तदातुनविधिशब्दस्यावृत्तिरिति बोध्यम्। भक्ष्यनियमइति।
अत्रशास्त्रेनियमस्यसामान्यशास्त्रबाधकत्वमिति वचनम्यव-

चनेनबाधइति नियमत्वंयुक्तम् । पञ्चपञ्चनखेत्यस्यतुनैवं तत्रसर्व्वमांसभक्षणस्यरागतः प्राप्तत्वेनबाध्यवचनाभावात् । भाष्यन्त्वितरमांसभक्षणनिषेधेतात्पर्य्यकम् । किञ्चयथावा-च्येप्रातिपदिकसंज्ञायांसाधुत्वंस्यात् । एवञ्च पञ्चनखभक्ष-णाभावेप्रत्यवायः स्यात् भवतितुनेतिवैलक्षण्यसत्वाच्चिन्त्यमे-तत् । तद्व्याप्येति । सचभिस्त्वादिः यदितु पूर्व्वत्रासिद्धमित्य-तोनलोपःसुप्स्वरेतिसूत्रेपूर्वत्रेत्यनुवर्त्यपूर्वेष्वेषु विधिष्वित्युच्य-तेतदेदंव्यर्थंषत्वस्यसपादस्थत्वाभावात् । वैरूप्यापत्तेश्चेति सा-चस्वरविधौ विधित्वमितरेषु नियमत्वमित्येवंरूपेविधिशब्द-एकत्रकर्म्मसाधनत्वमिति वैरूप्यस्यत्वन्मतेपि सत्वाच्चिन्त्य-मतत् तस्मात्पूर्वत्रेत्यत्राप्यनुवृत्तिरेव ज्यायसीति बोध्यम् । न दोषइति । ननु संज्ञाग्रहणंमास्त्वयमर्थश्चनकर्तव्योनियमश्च स्यादेवेति चेन्न । ग्रामणिपुत्रावित्यत्रद्वन्द्वे ग्रामणिशब्दस्य पूर्वनिपातोत्तरह्रस्वप्राप्त्यापूर्वंघित्वाभावात्पूर्वनिपातोनस्यात् । ब्रह्मवाचककशब्देनदिवशब्दस्यसमासेद्युकावित्यत्रपूर्व्वनिपा-तेसतिसन्निधत्वं प्राप्नोतिनोत्तरप्रयोगइति तदर्थमेवैतादृशसूत्रा र्थाश्रयणस्यावश्यकत्वात् तत्रोतरपदेप्रत्ययलक्षणंनोत्तरपदत्वे-चेतिनिषेधात् तन्निपातोत्तरन्तुनतन्निषेधप्राप्तिरुत्तरपदस्य-कार्यित्वएवतन्निषेधप्राप्तेरितिवदन्ति नन्वेवमपिहरिहरावि-त्यत्रपूर्व्वमेव घित्वप्रवृत्त्यादोषः न च तदुत्तरमपि तत्प्रवृत्त्या-नदोषइति वाच्यम् । यद्देशएवघटोवर्ततेतद्देशएवघटोभवती-ति प्रतीत्यापत्तेरिति चेन्न । द्वन्द्वे घीत्यस्यावृत्त्यार्थद्वयाङ्गी-कारात् । हलिच । रेफान्तधातोरुदाहरणानि । सुरधातोःक्वि-

पिसूङ्करोतीत्यादीनि । धातोःकिमर्थिःकरोतीति । नन्विदुदुप-
धस्येतिऽयर्थःस्यादिति तदवयवाङ्गत्वेन तत्प्रवृत्तिरिति चेन्न ।
हरिर्य्यणतीत्यादौ हलिचेतिदीर्घापत्तेः । नसंयोगात् । अत्र-
नहलोवमादित्येवसूत्रयितुमुचितं हलःपरौयौवमौततः परस्या-
नोकारस्येत्यादिसूत्रार्थः नन्वेवं पटमनइत्यत्रपटशब्दाण्णिच्-
ततोमनिन्प्रत्ययेणिचिटिलोपेतस्य पञ्चमीसमासेनस्थानिव-
त्वेन हलपरत्वाभावाल्लोपःस्यात्संयोगग्रहणेन संयोगसंज्ञाया-
द्विष्ठत्वात्परस्यैवनसविधिरिति नस्थानिवद्भावइति चेन्न । त-
स्यानित्यत्वात् । इन्हन्पूषार्य्यम्णाम् । स्येतिदीर्घइति । एते-
ननोपधायाइति सूत्रस्थोपधाग्रहणस्येदमेव फलमिति सूचितं
यदित्वनन्तरस्येति न्यायोपाध्यसामान्यचिन्तेति चाश्रीयतेत-
दात्वसन्तस्येति सूत्रउपधाग्रहणानुवृत्तयेगोमानित्यत्रनुम् दी-
र्घयोः प्राप्तावुभयोरेकविषयत्वेन दीर्घस्यनुमपवादत्वंस्यादिति
गोमानित्यत्रनुम् नैवस्यात् । उपधादीर्घो नुम्तूगिद्भिन्नो-
द्देश्यत्वान्नेति । वृत्रहयतीति । नन्वत्राकारः स्यादुपधा-
यावृद्धिः स्यादिति चेन्न । अत्रउपधायाइत्यत्रोपधाशब्देन पू-
र्व्वपदाघटकस्यैवग्रहणात् । अतएव वृक्षवयतीत्यत्रवृक्षोत्तरा-
कारस्य वृद्धिर्नस्थानिवत्त्वन्ननपदान्तेतिनिषेधात् अतएवज-
गच्छब्दाण्णिचिजागयतीत्यत्रवृद्धिः । अन्यथातुल्यत्वादवृद्धिर्न-
स्यात् । स्यायंनियमइत्यादि । ननु हलङ्यादिसूत्रेणत्वसिद्धि-
रेव तत्फलमिति विधित्वसम्भवमितिकथम् नियमत्वमिति
वाच्यंरषाभ्यामित्यनुवृत्त्यारेफषकाराभ्यांपरस्येति सूत्रार्थाश्रय-
णेननियमं साधयितुमुचितत्वाद् वस्तुतोऽपूर्व्वस्येति परिभा-

षाहन्तेर्णत्वमात्रमस्यालिङ्गम् । एवञ्च येनवाक्येनहन्तेर्णत्व
न्तत्रपूर्वस्येत्युपतिष्ठतइत्यनियमेनियमकारिणत्वाभिप्रायेण-
नियमइत्युक्तम् । हस्थानिकेति । अत्पूर्वस्येत्यस्यभाष्येप्र-
त्याख्यानेतुह स्थानिककवर्गाभाववद्धन्तेरुपलक्षणत्वाद्धादेशेषु
प्रतिषेधोवक्तव्यइत्यस्याप्यत्रैवतात्पर्य्यम् । प्रघनाघनइति ।
नन्वभ्यासस्यनैरर्थक्यादर्थवद्धन्तित्वाभावान्नणत्वं परस्यत्व-
भ्यासव्यवायान्नेति चेन्नहन्तेरित्यस्यार्थवद्धन्तिसम्बन्धइत्यर्थे-
नगत्वापत्तेरित्याशयात् अतएव प्रणिहिनादौनणत्वमुभौसा-
भ्यासस्येतिचात्रलिङ्गम् । नकर्तव्यमिति । तत्तुप्रत्याख्यानप-
क्षे प्राप्नोत्तुनदोषः तत्पक्षेतन्मतंवचनेनैवनिर्व्वाहात् । हा-
देशइति चेदंवार्तिककृतासूत्रस्य प्रतीकंगृहीतंकुव्यवायइत्या-
दिणत्वविधायकशास्त्रेषु णत्वस्यप्रतिषेधइत्यर्थः । तेनटीको-
क्तानुक्तिशङ्काप्रत्युक्ता । मघवाबहुलं । लोकेऽसाधुत्वमिति ।
इदंचिन्त्यम् । मघवन्शब्दस्यत्रन्तादेशस्यासाधुत्वबोधनेनोप-
पत्तौविशिष्टस्यासाधुत्वबोधनेमानाभावात् । अतएवेन्द्रोमरु-
त्वान्मघवाइत्यादयोलोकेप्रयोगाबहवोदृश्यन्तअतएववार्तिके-
तदित्येकवचनप्रयोगः सङ्गच्छतेऽन्यथैताविति वक्तुमुचितं-
स्यात् । आभीयान्तरङ्गइति । नन्वाभीयान्तरङ्गस्यासिद्धत्वेपि
पररूपस्याभावेनान्तरङ्गपरिभाषाप्रवृत्तिः स्यादिति। एवञ्चस-
म्प्रसारणस्यासिद्धत्वेपि पररूपस्यासिद्धत्वाभावाद्यस्येतिलोप-
इति वाच्यं संप्रसारणाश्रयपूर्वरूपेतन्निष्ठधर्म्मस्यातिदेशात् ।
अतएवान्तरङ्गपरिभाषाज्ञापनपरभाष्यंसङ्गच्छते । अन्यथाव-
हिरङ्गसंप्रसारणस्यासिद्धत्वेपि पररूपस्यासिद्धत्वाभावाल्लघूप-

धगुणेविश्वौह इति सिद्धौचारिताथ्याभावेनासङ्गतत्वं स्पष्टमेव वस्तुतोऽसिद्धवदत्राभादित्यत्रजातासिद्धत्वमेवातएवभाभिकारेपरत्वादिनाबाध्यबाधकभावोभवत्यतएवत्रनवीनाअन्यथा तेनेदं बाध्यमुतानेनेति विनिगमनाविरहः स्यादिति प्रकृतेतदभावादन्तरङ्गपरिभाषाप्रवृत्तिः स्यादिति चिन्त्यमेतत्।नार्थं इति ननु स्थानिवद्भावेनानुत्वाभावेप्यनन्तत्वंस्यादेवसुबन्तत्वमिति चेन्न । अल्लोपोऽनइत्यत्रानोनिर्दिश्यमानस्यैवसत्वेनास्यैवात्रानुवृत्त्यात्राप्यनोनिर्दिश्यमानस्यैवग्रहणात् । अर्थाभिकारानुरोधाद् यद्वावैयधिकरण्येनैषामनइत्यर्थोऽत्रसचनिर्दिश्यमानएवतस्यावृत्त्यातदन्तविधिरन्नन्तस्येत्यादिरिति नदोषः । क्विन्प्रत्ययस्यकुः । घइतीति । यदिवस्यान्तरतम्याद्धकारः फलमपेक्षतइति तर्ह्यत्रापि न्यासेगइत्येवोचितम् । अस्यासिद्धत्वेनजश्त्वाप्रवृत्तेः प्रक्रियालाघवाच्च । तथापि कैयटानुरोधेनघउक्तस्तदाशयस्तु विवरणेद्रष्टव्यो नत्र यथा कथं चिद्धकारस्यवकारान्तरतमत्वोपपादनेपिनशोर्वेत्यत्रशाकारषत्वजश्त्वाभ्यामुकारउकारान्तरतमत्वन्दुर्वचमेवेतिकथमुच्यते नशेर्वेत्यत्रघानुवृत्तावप्यदोषादिति वाच्यम् । गृहंगन्तुम्प्रवृत्तस्यकपाटंपर्य्याटयाग्रइति न्यायेनतेनतस्यतद्वदेवसुवचतरत्वात् । यद्वाझषस्तथोरित्यतः प्राक् क्विनोधोन्तेनशेर्वाझलाञ्जश इति न्यासेनजश्त्वसुलभेफलभेदाभावः । नन्वेवमपि प्रक्रियालाघवायगेविधेयेघविधानस्यकोऽभिप्रायइति चेच्छृणु दादेरित्यतस्तदनुवृत्तिसम्भवेन विधेयानुपादानेलाघवमिति । तथाचैवंन्यसनीयम् । चोःकुरित्यस्यानन्तरनहोधः आह स्थोग्रश्चअरजहोडः

दादेशीतोर्वाग्रहः किनोन्तेनशर्वाएकाचोवशोदधस्तथोःझला-झशिति । ननु ससुट्कमेवैवन्तुनयुष्मदस्मदोरनादेशइत्यना-देशपदं योचीत्यत्रैवक्रियतइति तुनोक्तेरूपस्यसौलभ्यादिति चेन्न । युष्मयतेर्युष्माकमित्यत्राकारश्रवणार्थन्तदावश्यकत्वा-त् । अभिधानस्योक्तत्वात् । न च पञ्चमोसमासेनस्थानिव-त्वेनाश्रेष्ठ्व्यएवाभ्यम्भ्यमोःफलभेदापत्तिरिति वाच्यम् । प-ञ्चमोसमासस्यानित्यत्वेन तत्राश्रयणेनफलभेदाभावेप्यत्राश्र-यणेमानाभावात् । एवं दोषःसुष्ठात्रेति बोध्यम् । किञ्चयु-ष्मदस्मदोरित्यस्यापि च चारितार्थ्येऽनादेशेचि । हलिचोभय-त्रापि यत्वापत्तिरिति तत्राचोतिनकर्त्तव्यंस्यादत्राप्यनादेशस-त्वेतुपरिशेषलब्धमेव तद्भवतोति नकार्य्यमितोदानींगौरवाप-त्तिः । एवञ्चेदंसम्यगेवेति बोध्यम् । किञ्चयोचीत्यत्राप्यनादे-शइति मास्तुङ्तिोथायाञ्चेत्यात्वविधानाज्ज्ञापकादादेशेऽचि-तदभावादितीदन्तुपुनश्चिन्त्यमाकमित्येवटिलोपेन सुटोऽप्रा-प्तेः ससुट्कनिर्देशोव्यर्थः । व्याख्यातमिति । शेषग्रह-णस्य पूर्वकर्त्तव्यतायाउक्तत्वाच्छेषग्रहणमनुवृत्त्यैव भाष्योक्त-रीत्यास्वादिविषयेत्वमादेशवारणस्यौ चित्येनविप्रतिषेधकल्पनं भाष्यानुक्तं मूलकृताप्युक्तम् । एवं शेषग्रहणस्यस्वमतेस्पष्टा-र्थत्वस्यातदनुमानस्याशक्यत्वात् । पूर्वविप्रतिषेधाश्रयणभे-देनापि नतदप्यसङ्गतमेतदर्थशेषग्रहणस्यावश्यकत्वाच्चेति चि-न्त्यमेतत् । विग्रहइति । न च विग्रहरूपाणामभावइतीदमयु-क्तमिति विग्रहोयस्येति बहुव्रीहिणासमस्योपेक्षणीयत्वात् । प-दस्यान्तइति । नन्वन्तग्रहणंमुख्यार्थलाभार्थं तेनान्तइत्यत्रन-

दोषः तत्रान्तत्वस्यनिर्द्दिष्टत्वादिति चेन्न । उक्तार्थज्ञापने-मानाभावाद् नपूर्व्वमित्यादावनुदात्तमित्यस्यानधिकारात् । श्रु-तप्रथमेति । वस्तुतःपरस्येत्यस्यानुपदमेव व्यधिकरणत्वोक्ते र्विपरिणामकथनमयुक्तम्। न च तृज्वत्क्रोष्टुरिति वन्नाभिन-भक्ते तिवच्चस्यान्यादेशभावकल्पनस्यौचित्यात्तिङन्तस्यानुदा-त्तत्वाच्चादेशोभवतीत्यर्थादुदात्तसाम्येनाद्युदात्तएकानुदात्तत्वो-भयविशिष्टादेशापत्तिः पचतीत्याद्यनुदात्तत्वैकोदात्तविशिष्टोवा-स्यादतः सर्व्वग्रहणेसर्व्वानुदात्तइति कर्त्तव्यमेवेति चेन्न । ति-ङितिभाष्योक्तज्ञापकात्तत्रतत्रान्तग्रहणाच्चात्रतिङ्ताववयवस्य ल क्षणीयतिङित्यवयवश्चानुदात्तत्वकइत्यर्थेविनिगमनाविरहेण-सर्व्वथावयवस्यसिद्धेवैयर्थ्यमित्याशयाद् न च तिङ्ताववयवस्ये-तिस्थानषष्ठीत्वादादेः परस्येत्यापत्तिरैकैकावयवस्यालेनानुदा-त्तत्वविधानादादित्वस्य वक्तुमशक्यत्वात् । आदित्वस्य-समुदायविधानएवसत्वात्। यदितत्रतत्रान्तग्रहणाल्लाघवात्ति-ङ्समुदायस्यैव षष्ठीङ्कल्पयित्वाविधानमित्युच्यते तदात्वादेरि-ति प्रवर्ततएवेति सर्वमिति कर्तव्यमेवेति चिन्त्यमेतत् । मे-स्वमिति । न च तद्ग्रामेकंवलोमेस्वमितिच्छान्दसत्वस्यैवोदा हरणंनवाक्यस्येत्यस्तुपर्युदासइति वाच्यम् । शालीनान्त-इत्यलच्छान्दसत्वस्यवक्तुमशक्यत्वात् । अन्येत्विति । ननु-त्वमित्यस्यापि सम्बोधनेवर्तमानत्वेप्रथमैव स्यादिति त्वामि-त्याद्यसङ्गतमिति चेन्न । अलसम्बोध्यत्वेनज्ञानवत्पदार्थयुष्मद र्थः । अतएव चेतनेऽस्यप्रयोगोऽहमनेनसम्बोधितइत्यन्चेत-नस्यज्ञानवत्वाभावात् । एवञ्च सम्बोध्यत्वप्रकारकज्ञानवद्-

र्थकत्वेपि नसंबोधनार्थकत्वमित्यदोषात् । नचैवमपिभवच्छ-
ब्दस्यसम्बोधनार्थकत्वाभावाद्भवन्तमित्याद्यसङ्गतम् प्रथमा-
याएवापत्तेरिति वाच्यम् । चेतनाचेतनसाधारणतयासम्बो-
ध्यत्वमात्रार्थकत्वेपि प्रवर्तनाविषयसम्बोध्यत्वाभावादत्रप्रवर्त-
नाविषयसम्बोधनस्यैव ग्रहणाद् हेभवन्नित्युक्तेहितस्य प्रव-
र्तनाविषयकज्ञानम्भवतिमयायत् किञ्चित्कारयतीति भवा-
नित्युक्तेतुननद्दर्थक्रियान्वयिसम्बोधने प्रथमात्वाम्भवन्तमि-
त्सत्तक्रियान्वयित्वाभावेनादोषः परन्तुयदार्थेण क्रियान्वयि-
त्वमस्योक्तम् । वस्तुतस्तादृशक्लिष्टकल्पनापेक्षयास्वेति पद-
स्यस्वरसतः सार्थक्यायत्पूर्वोक्तमेव युक्तमिति प्रतिभाति ।
आमन्त्रितम् । वत्करणमिति । ननु तदभावेऽस्यादर्शनापत्तिः
नत्र लोपएवकार्येऽविद्यमानग्रहणेनाविद्यमानवदित्यर्थः । लो-
पषष्ठ्याआपस्याऽलोन्त्यस्येत्यस्यापत्तेः सर्वादेशार्थमावश्यकमेवे-
दमिति वाच्यं सर्वथालोपेतदर्थबोधेनैव स्यादिति तद्बोधार्थपरं-
प्रयोगस्तुस्यादितीदंपूर्वप्रयोगाभावमात्रफलकंस्यात्तथाच राज-
दन्तादिषुपरमित्युक्तमामन्त्रितमित्येवपरप्रयोगात् सिद्धेरिदं
व्यर्थमेव स्यादितिवत् करणार्थःप्रतिपद्यतइति अयंवति-
व्यर्थएव न च शिष्यमाणंलुप्यमानेति न्यायेनसिद्धेपरप्रयो-
गाणामनावश्यकसजातीयविषयेतत्प्रवृत्तेः । ननुव्यासइत्यत्रपू-
र्वलोपेविजातीयेनाप्यर्थबोधइति प्रकृतेपि तथैवस्यादिति सर्व-
लोपार्थमावश्यकमिति चेन्न लोपपरइत्येवसिद्धेसामर्थ्यादित्य-
र्थसिद्धेः नचैवं त्रिपाद्यांप्रवृत्त्येवतिघटितत्वमिति वाच्यम् ।
तथासतिसन्नित्यस्याविद्यमानत्वेन तत्रङमुण्नस्यादित्यनि-

ष्टमेवापद्येतेति तदप्रवृत्तेरिष्टापत्तेः। नन्वेवंवत् करणमूलोक्त-रीत्यात्रिपाद्यांप्रवृत्तिः स्यादिति पूर्वङमुडनापत्तिस्तर्हि पूर्वेणप-रस्यप्रत्यासत्त्याग्रहणएवप्रवृतिः कल्प्यतेनाम। आमन्त्रितात्प-रस्येति। अवतत्रेदमित्यर्थः। एवमनुगतरूपेणकल्पनयाआम् भोइत्यत्राप्यामन्त्रितात्परत्वेनाश्रयणाभावेनात्रप्रवृत्त्यासर्वत्रा-नुगतरूपेणादोषात्। नन्वेवं प्रत्यासत्त्यैवविनिर्वाहेवतिरर्थः प्रत्यासत्तित्वाभावार्थमित्यावश्यकत्वादिदमेवकेचित् स्वाश्रय-मिति दिक्। स्मरामीति। न च पश्यार्थैरिति निषेधइन्द्रि-यजन्यएवनिषेधात् स्मरणस्येन्द्रियजन्यत्वाभावात् संस्कार-जन्यत्वाद् यद्वासाक्षात् कारार्थकेतिनिषेधःस्मरणन्तुनसाक्षा-त्कारः मानसंध्यानन्तु साक्षात्कारवत्। एवं मनसासाक्षा-त्करोमीति सङ्गच्छते। इन्द्रियजन्यत्वंसाक्षात्कारत्वं तन्ना-स्यास्तीत्याग्रहेतुनिर्मार्ङ्गीकारएवेति बोध्यम्। निवृत्तिरिति। नन्वयइत्यस्यच्छन्दोवत्त्वाभावादपादादाविति सत्वेपि नदोष-इति चेच्चिन्त्यमेतदग्नइन्द्रवरुणेति वह्वृचउदाहरणार्थमावश्य-कमेवैतदित्यन्यदित्यादिबोध्यम्। करोषीति। सिबर्थआ-श्रयःतेनैकाधिकरण्यरूपसामानाधिकरण्यमस्त्येव। ननुप्रवृत्ती-ति। ननु घटोघटमित्यर्थप्रवृत्तिनिमित्तादेर्गर्भस्य विवक्षणेपि घटःकलशमित्यादौ घटत्वकलशत्वरूपप्रवृत्तिनिमित्तभेदमादा-यशाब्दबोधवदत्राप्यग्न्यादिपदानामर्थपरत्वस्य पूर्वमुक्तत्वाद-र्थैक्येपि पूर्ववद्धर्मभेदोप्यस्त्येवेति किमर्थंननुग्रन्थइति चेच्चि-न्त्यमेतत्। परेत्वग्न्यादिशब्दः शब्दपरैवार्थपरत्वेत्वेतानिते-ध्न्यइति पुनरघ्न्यइति पदवैयर्थ्यापत्तिः। अघ्न्यएतानि-

नवनामानीत्येवस्वारसिकोर्थः । नन्वैकार्थबोधरूपसामाना-
धिकरण्याभावः तवनामानीत्युक्तेत्वदर्थशक्तिरेषामित्यर्थो-
बोध्यतइति सत्सत्वाद् नच पुनरर्थपरत्वमुच्चारणकालशब्द-
परत्वमेव तवनामानीति वाक्यबोधोत्तरं तेषामेकार्थतेति सा-
मानाधिकरण्यन्तु वर्ततेऽर्थपरत्वन्तुनेति पूर्वग्रन्थश्चिन्त्या-
शयोर्नान्वितिग्रन्थइत्याहुः। ननु सामानाधिकरण्याभेदान्वय्य-
र्थप्रतिपादकत्वमेवास्त्विति नदोषः । न च देवकरोषीत्यत्राप्ये-
वंवारणआमन्त्रितेत्यस्यत्रैयर्थ्यमपरमनुकूलमेवेति । यद्वातत्रा-
प्यभेदान्वयेऽस्तिक्रियातद्धतोस्तादात्म्याङ्गीकारात् । नन्वत्व-
मित्यनेनाभेदान्वयेपि नदेवेत्यनेनाभेदान्वयोदेवत्वमिति वा-
क्यएकदेशन्यायेनदेवेत्ये तन्मात्रप्रयोगेतुत्वं पदार्थस्यतस्मि-
न्नेवान्तर्भावेनाभेदान्वयस्यसूपपादत्वात् करोषीत्यस्य सु-
न्दरंकरोषीत्यस्यसुन्दरं करोषीत्यर्थप्रयोगेसुन्दरंपदार्थेभेदस्य-
सत्वाच्चेति चेन्नाग्न्यादिशब्दानांशब्दपरत्वेन वारणेप्यर्थ-
परत्वेनतदसत्वात् नन्वर्थपरत्वेविशेष्यविशेषणरूपसामान्यव-
चनमप्यस्तीति कथं तेनवारणंसामान्यवचनमित्यस्याव्यापक-
धर्मावच्छिन्नमर्थः घटोनीलइत्यत्रनीलापेक्षयाघटस्याव्यापक-
धर्मावच्छिन्नमेव प्रकृतेऽग्न्यादिपदार्थानां समाननियतत्वेना
व्यापकधर्मावच्छिन्नत्वमिति नदोषः । अथकिमर्थंसमानाधि-
करणेइति पदमिति चेन्न।पाचकपाठकश्च युवांपचतमित्यादा-
वव्यापकधर्मावच्छिन्नत्वरूपसामान्यवचनत्वस्य सत्वादापात-
स्तदावश्यकत्वात्। ननु प्रथमान्तपदातिरिक्तस्य समुच्चयएवना
स्तीति सम्बोधनान्तरस्यापि समुच्चयाभावइति चार्थेद्वन्द्व इ-

ति सूत्रेशेखरउक्तत्वादिदं प्रत्युदाहरणमसङ्गतमिति चेन्न । उश्चउश्चेति मनोरमादिषु प्रामाण्यप्रयोगेषु तदतिरिक्तसमुच्चयस्वीकारबाधकाभावात् तत्र समानाधिकरणपदमपि मानमस्त्विति दिक् । निपातनैरिति । ननु युजादिषुनिरुपपदेपि निपातनसत्वात् कथं साहन्त्रर्येणसुबुपपदत्वलाभइति चेन्न । सर्वत्रलाक्षणिकस्य निपातनस्यसत्वेन तत्साहचर्यादस्याप्यलाक्षणिकत्वसुबुपपदकत्वरूपनिपात्यतइत्याशयात् । अनित्संज्ञकेति । नन्ववुददलानापत्तिः नच तत्र लोपोऽनिष्टएवेति वाच्यं इरइत्संज्ञावाच्येति वार्तिकसत्वेतत्रलोपस्य जायमानतयातद्व्याख्यानइत्संज्ञकेकारान्तत्ववदनापत्त्याफलभेदेप्रत्याख्यानानापत्तेः । यद्यपीत्पदस्य शब्दरूपाध्याहृततदन्तविधिनेत्संज्ञकेकारान्तभिन्नत्वेन नदोषः । न च रेफवान्तएवेकारः तदन्तविधिघटितवाक्यार्थसामर्थ्यादन्त्येदितोग्रहणात् । तथाप्येकदेशेशब्दाध्याहारस्य कर्तुं शक्यत्वेदोषएव नत्वेदितोनेति प्रसज्येततत्सम्भवः । प्रसज्यस्यात्रदृश्यमानत्वादितिचेत् पर्युदासश्चिन्त्यएव किन्तुप्रसज्येतशब्दस्वरूपाध्याहाराणान्तदन्तत्वेदोषइति तत्वंनप्रवृत्तिरिति अनन्त्यविकारइति प्रत्ययाप्रत्ययविशेषणाद् इति भावः। व्याख्यानादिति । चाविति लिङ्गात् । अच्प्रत्याहारग्रहणेहि तस्यासम्भवएवस्यात् । न च वर्णग्रहणंतत्रेति वाच्यं छेचेतिवैयर्थ्यापत्तेः । अन्यथासर्वस्यपरेदीर्घस्यैव सत्वेदीर्घादित्येवसिद्धेऽसङ्गतिः स्पष्टैव नत्वोत्तरपदइत्यधिकाराच्चवर्गेषूत्तरपदएवदीर्घसत्वादुत्तरपदाभावेच्छेचेतिचरितार्थन्त हिंचावित्यत्रस्वरितेनाधिककार्याद्वर्णग्रहणञ्चेति पठितस्यचग्र-

हणंचेतितत्वम् । अनभिधानमिति । तृतीयइत्यत्रैव प्रयोजनस्य भाष्येकथनात् । विष्वम् । अत्रचावित्येवक्त्वाऽप्रत्ययग्रहणंन- कार्यमिति केचित् । क्रुकमादावितिपठित्वातदपि वक्तव्यंना- स्तीत्युक्तंनचगणग्रहणापत्तिः।क्रुआदिसमुदायघटकउत्तरपदइ- त्येवमर्थस्यविलंबोपस्थितिकतयाक्रुआदिर्यस्य तस्मिन्नुत्तरपद- इत्यर्थस्यशीघ्रोपस्थितिकतयातदभावादित्याहुः । निपातना- दिति । कचिदन्तोदात्तस्यापि स्थानित्वादन्यादृशप्रयोगेप्राप्त- अन्यादृशकरणरूपस्वाभिमतनिपातनाभावादिदंचिन्त्यम् । अ- भेदकाभेदकाइति स्वोकर्तृमतेतुयुक्तमेवेतितत्वम् । अदसो- ऽसेर्नदोषइति । नन्वदकयतेः क्विपिमुत्वापत्तिरिति चेन्न । निर्दिश्यमानत्वाभावेनवारणाद् नचाकज्विषयेनसतस्याः ति- ङन्तविषयादावेवप्रवृत्तेरुक्तत्वात् । नचैवममुकइत्यसङ्गतन्त- स्यासाधुत्वात् । परेतु क्विबन्तेपोष्टमेव मुत्वमितिनामुकइत्य- सङ्गतमित्याहुः । शब्दान्तरेति । दीर्घेकृतेतद्व्यक्तेरभावेनह्र- स्वस्यापि शब्दांतरप्राप्तिकत्वमिति चिन्त्यम् । परनिमित्तकत्वे- नेति । सुस्वूर्षतीत्यादावप्युक्तांतरंगत्वाद् द्वित्वेऽभ्यासउकार- श्रवणानापत्तिरिति तादृशांतरंगत्वंतुत्तुग्यणयोर्यगवृद्धिकृत- लक्ष्यभेदानाश्रयणमित्येवोच्यतेत्रविषयेजातवहिरंगस्थलएव- नतु सुप्रकालप्राप्तिकइत्युक्तम् । एवंच प्रकृतेपिनान्तरंग- त्वमिति चिन्त्यमेतत् । यद्वोदवोढामित्यर्थमेकव्यक्तिवृत्ति- विकारकृतलक्ष्यभेदानाश्रयणमित्येवोच्यते । प्रकृतेतुव्यक्तिद्व- यवृत्तिदीर्घइकारस्यभेदएवेति नलक्ष्येलक्षणन्यायप्रवृत्तिः । न- नूषतुरित्यत्रव्यक्तिद्वयवृत्तित्वात् पुनर्ह्रस्वापत्तिरिति चेदेवंत-

क्ष्यामः पूर्वोक्ताकारस्य नपुंसकत्वमुत्तरस्य तु पुंस्त्वं तयोः समाहारे-सुपो धात्वित्यपेक्षया पूर्वं दीर्घे ह्रस्व इष्टसिद्धिरिति नित्यमेवै-तद्‌ कालइत्यपि नित्यमेव तन्मते प्युकरणं सवर्णग्रहणात् । अ-संदेहाय ह्रस्वोच्चारित इति चेत्सत्यं प्रकृतेपि बाध्यमिति वस्तुत-स्तत्स्वीकारे सनासंशेत्स्यादावापत्तिः । आदेश एवेत्युक्ते तु संकोच एव दोषः स्यात् । किश्चोदुपधाया इत्यलानयैव सिद्धे प्रश्लेषप-रभाष्यविरोधः किञ्च भाव्यमानेनेत्यत्र स्वरितातिरिक्तविशेष-णान्निषेधाप्राप्त्या वैयर्थ्याभावः । अष्टादशानां ग्रहणन्तु न तत्प्र-योजनाभावात् । स्वरमात्रस्यैवोपयोगात् । किञ्च तपरप्राप्त-स्य नानया निषेध इति पथिमथोत्यत्र शेखर उक्तत्वात् तपरकर-णं चरितार्थमेव किञ्चादसोमादिशायते नैप्रश्लेषसिद्धौ प्रयोज-नाभावः । नचेकार एव प्रगृह्यार्थं चरितार्थम् । अलाप्यद-सोऽम्वादेशविधानेनैव सिद्धे गुरूपन्यासादेव तत्सिद्धेः । अमुक-इत्यत्र सर्वादेशापत्तिस्तु न तस्यासाधुतायाउक्तात्वाददमुयङ-र्थं नतत्रादद्र्यङ् ङित्येव सिद्धांतयिष्यमाणत्वात् । अत एवेयं नाश्र-यणीयैवेत्यन्यत्र विस्तरः । मेवावश्यकमिति । इदन्तु तत्त्वं भसं-ज्ञापदत्वरूपे शास्त्रीयेपि भवति न पदं तु भाष्यादिति नलोप इति सूत्रेपि यच्चिभमिति भ्यामिप्रवृत्त्या पदत्वप्रतिबंधान्नलोपाभा-वार्थं कार्यकालत्वं युक्तमेव किञ्चाष्टाध्यायीकृतपरत्वाश्रयणात् परत्वात् भसंज्ञैवेति न दोष इति तत्त्वम् । एवंच भाष्यमपि नैक-देश्युक्तिरङ्गेन प्रत्ययाक्षेपस्य सर्वलोक्तेः प्रत्यय इत्युपस्थित-स्यानो विशेषणाक्षोत्थिताकांक्षत्वमनतिरस्कृतम् । कत्वविष-य इति । तेनात्वविषयस्यापि संग्रहः । मानाभावादिति । अ-

लगुरुत्तरणाः कश्चिदन्त्यसदेशानन्त्यसदेशयोःप्राप्तिप्रसिद्धअ-
न्त्यसदेशोपस्थितिरत्रोत्वस्य तथात्वेपि नप्रवृत्तिरवधारणग-
र्भानन्त्यसदेशस्यैव विकाराभावात् । अमुमित्यत्रास्यापि प्राप्ते-
र्मकारादावपि नप्रवृत्तिरेकप्रयोगेऽदद्रिशब्देन्त्यसदेशानन्त्य-
सदेशयोः प्राप्त्यभावाद् रेफेणव्यवधानादन्त्यसदेशत्वाभा-
वादतएवोक्तमेकइति भाष्यप्रयोगोपपन्नः । अन्यथान्त्यसे-
देशत्वाभावान् मुत्वानापत्तिस्तस्मादप्रवृत्तिरेव युक्तेति ना-
प्यदमुयङितिभवितव्यमिति भाष्यविरोधस्तत्रासेरिति प-
क्षएवंभवितव्यं तन्न स्यादिति शङ्कायामुक्तञ्चेति समाधाने-
नादोषात् समाधानन्तुकेचिदिच्छन्ति वस्तुतस्तुयेनेत्येवेति भा
ष्याशयेनादोषात् । तस्माददद्र्यङ्ङित्येवेष्टंनद्वयमिति सिद्धा-
न्तमाहुः । अतएवहिः प्रयुक्तइति सुधियः । समोमिङिति । न-
न्वकचिक्कृतेर्विशिष्टस्यादेशार्थं यथान्यासएवास्त्विति शङ्कावस-
रइति चेन्न सर्वनामसाहचर्येणाव्ययादपि वाचकत्वरूपप्रा-
धान्यएवप्रवृत्तिर्नतुद्योतकस्थलेप्रकृतेतुसमोद्योतकत्वान्नाक-
नःप्रसङ्गइति तात्पर्यात् । ननु नलोपोनञइत्यत्राशितिन्यासे-
ऽकब्राह्मणइत्यत्रदोषदानसाहचर्य्येणाभिप्रेतमिति चेदुच्यतउ-
पसर्गस्यायतावित्यत्रभाष्येणोपसर्गविषयेऽकचोऽनभिधानात् ।
तत्रह्ययतावित्युपसर्गविशेषणं रेफस्यवाआद्य परेःप्रतिषेधः । अ-
न्त्येप्रतेरपूर्वविधिरित्युक्तम् । यद्यकजुपसर्गेस्यात्तदापरिवदक-
च्यपि निषेधआवश्यकइति तदनुक्त्याऽनभिधानमाश्यकमित्या
हुः । तिरसः । अत्ततिर्यइति । अनीति । अतीतिवास्त्विति केचित् ।
अयंविचार आद्यअमञ्चतीत्याडित्यत्राकारपरत्वादापत्तिः ।

अलोपग्रहणेत्वेकादेशापहृतरूपलोपसत्त्वेन नापत्तिर्द्वितीयेऽप्य‐इत्यस्यानुकरणेप्रकृति वदनुकरणेनेति पक्षअअङ्इत्यत्रा‐पदान्तादकारादतोगुणइति पररूपआदेशः स्यादलोपग्रहणे‐तूक्तरीत्यानादेशइति नदोषइति चेन्न । अतीत्युक्तआङित्य‐त्रदोषतादवस्थ्यादतःपरत्वन्तुसर्वत्रैवेत्याहुः । नाञ्चेः । रूढ‐स्येति । ननु प्राचीनइति विशिष्टरूढत्वस्यादृष्टत्वेन वक्तुमश‐क्यत्वाद्यौगिकेनलोपानापत्तिः पूजायागम्यमानत्वादिति वा‐च्यम् । प्राचोक्तं पदंक्वचित् । पूजयोपादीयतेक्वचिन्निन्द‐याचतत्रनिन्दायां लोपयुक्तःप्रयोगः पूजायान्तुनकारसहितए‐वेति केचित् । अपास्तमिति । वस्तुतउत्तरार्थंनकारस्यावश्य‐कत्वेनात्रनियमगौरवेणच तदयुक्तमेवेतिभाति । एतेनाञ्चुग‐तावचिपूजायामिति पठ्यतइदित्वादेवनलोपाभावेनाञ्चेरिति सूत्रमेवव्यर्थमित्यपास्तम् । पूजागम्यत्वेपि नलोपापत्तेः । अ‐ञ्चुयुजिकुञ्चामित्यत्रेकारकरणादञ्चीत्यस्याग्रहणापत्तेश्चोकारा‐करणेनतस्यापि ग्रहणेऽञ्चीत्येकइत्यस्याप्यापत्तेस्तत्राकारांतंक्रु‐त्वाह्यनुबंधकत्वादग्रहणमिति चेद्गौरवमेवेति दिक् । ओ‐पधत्वेति । क्रुञ्च्यादित्यत्राशीर्लिङितत्वन्तत्रनोपधप्रयोज‐नङ्क्रुच्यादिति तत्रकुचीतीदित्पठनेनापि सिद्धमिति क्रुंचेति पाठोव्यर्थः स्यादतोयंनओपधःकथन्तर्हिकुत्वमाशंकितन्तर्हित द्भाष्याद् कुत्वविषयेऽनुस्वारपरसवर्णत्वयोःसिद्धत्वमेवप्रति‐पाद्यताम् । आशीर्लिङिक्रुच्यादित्येवरूपमस्त्वितिचेत् चिन्त्य‐मेतत् । शतृवदिति । नन्वतृप्रत्ययान्ताएवनिपात्यन्तांकि‐मनेनगुरुभूतेनेति वाच्यम् । अतृप्रत्ययस्यप्रकरणपठितत्वा‐

भावात् पूरणगुणेति निषेधार्थमपि शतृवदित्यतिदेशस्यावश्य-
कत्वाच्चेत्याहुः । अत्वसम् । अनुवादकमिति । वस्तुतस्तच्छ्रू-
यमाणसंप्रतिपत्त्यर्थंतेन चन्द्रयतेःक्विपिचन्द्रमित्यत्रनदीर्घःणि-
लोपस्यतुनस्थानिवत्वंदीर्घविधौतन्निषेधाट् टिलोपः स्यादिति
मतेदोषेण कथं तदुपरिव्याख्यानेन निर्वाहइति दोषोदत्तए-
तद्वचनेनैननिर्वाहादिति चेन्न । इदमपूर्ववचनंनकिन्तुच्छयइ-
त्यस्यच्छआदेशोस्थानिवन्मूलकः छेणकारघटकत्वमारोप्यतइ-
त्यारोपमूलकोवातत्राद्ये ऽनेकान्तवादिनामुपरिनदोषः । अन्ये-
तु स्वावयवावयविनिघटकत्वमारोप्यतइति तदावयवत्वस्यैवा-
भावेन तदवयविनितद्घटकत्वस्यारोपेपि नमशक्यत्वव्याख्या-
नाश्रयस्यावश्यकत्वमिति नविरोधइति यत्किञ्चिदेतत् । अत्रे-
दन्तत्वंनोपधायाइत्युपधापदाभावेप्रक्तेकृतेनुमिदीर्घस्यचारि-
तार्थ्यसम्भवात् । तत्र कौण्डिन्यन्यायेनदीर्घेणनुमोबाधापत्तिः
तत्सत्वेऽनवकाशत्वाद्बाधेपुनरुत्सर्गप्रवृत्तिर्भवतीति नदोषइति
सुध्रियःकेचित्वतुपदमौपदेशिकात्वं तल्लाभार्थमतुप्यपिहलन्त्य-
मिति संस्कारानन्तरमानुमानिकादेशत्वंसमस्त्येवेति । अपि-
तूपसंख्यानंनापूर्वमित्याहुः । नलोपिनइति । यथा श्रुतेप्राङ्-
ब्राह्मणीत्यत्रोगितइति ङीबापत्तिः । उभेलक्ष्यानुइति । वस्तुत-
स्तूभशब्दस्यद्वित्वावच्छिन्नबोधकत्वादुद्देश्यतावच्छेदकद्वित्वरू-
पमेकमेवेति नवाक्यभेदः किञ्चविधेयतावच्छेदकभेदेन वा-
क्यभेदेप्युद्देश्यतावच्छेदकभेदेवाक्यभेदएवन यथाघटपटौस्त-
इत्यत्ननुगगाइत्यत्रशतनिष्ठस्वत्वनिवृत्तिविधेयाधारत्वस्वत्व-
निवृत्ति पूर्वकम्वास्वत्वप्रकारकेच्छायादण्डनपदार्थत्वादेवञ्च-

तिष्ठतेरेकत्वेपि विधेयतावच्छेदकंयत्तत्त्वम् । तथात्र वाक्यभेदादेववाक्यभेदोनतुविधेयतावच्छेदकभेदादिति स्वीकारेण प्रकृतेविधेयतायाअभेदेनादोषाद् यद्वास्वत्वंनविधेयतावच्छेदकमानन्त्यप्रसङ्गात् । अपितु स्वस्वत्वेनानुगतरूपेणेति नविधेयतावच्छेदकभिन्नं नच शतनिवृत्तिर्गर्गेषुनास्तीति वाच्यम् एकदेशद्वारासत्वादित्यलम् । असतीति । प्रयोजनाभावेस्यशब्दार्थप्रयोजनकथनस्योपहासपरत्वादिति भावः । अन्तरङ्गत्वादिति । वस्तुतोवोभवत्वित्यत्राभ्यस्तस्वरानोपत्त्येदमायनसत्रविषयकमेवान्यथाऽन्तरङ्गत्वादयादेशेतदाशयएवाभावेनतद्विचारासङ्गतिः । एवञ्चान्तरङ्गत्वादित्ययुक्तमेवेति बोध्यम् । किञ्चेत्यप्ययुक्तमेव । अजक्षुरित्यत्रजुसश्चारितार्थ्येन सामर्थ्याभावात् सामर्थ्यमूलकएवप्रवृत्तेः । तत्रापि शबभ्यस्तसंज्ञाद्यपेक्षयावहिरङ्गत्वादन्तिः स्यादेवेतिसामर्थ्यंसूपपादमिति केचित् । नदोषइति । वस्तुतऐत्सन्नित्यत्रैकादेशेपरादिवत्त्वेन सत्वेप्यभ्यस्तत्वाभावः । नचैकदेशविकृतन्यायेनतत्वं तस्यफलाभावेनानाश्रयणात्।अतएव स्थानिवत्सूत्रइमामुपन्यस्यैकदेशविकृतस्येति वक्तव्यमित्युक्तम् । तत्र वक्तव्यंभवतीत्येवफलमुक्तंनलक्ष्यसिद्धिरूपमुक्तंभाष्ये तदाश्रयणेवाऽर्द्धंविकारेतदप्रवृत्तिरेवेत्यत्राभ्यस्तत्वाभावादेवनदोषः।एवञ्च समासानाश्रयणेपि नक्षतिरभ्यस्ताद्विहितेनवारणंत्वयुक्तमेव जुहुवतुरित्यत्राभ्यस्तत्वानापत्तेः साहचर्यमपि पूर्वमुक्तमित्यलम् । केचित्तु देवदत्तादयोभोज्यन्तामिति स्वीकारेप्रत्येकमर्थापत्तिरित्युभेग्रहणमित्याहुः । चिन्त्यमिति । केचित्तु बहुव्रीहि-

फलत्वेनमानम् । स्रगितिभाष्योदाहरणेनापवादत्वंयुक्तमेवान्यथा रज्जुसृड्भ्यामित्यत्रेवषत्वापत्तेः । नचकथमुपयद्काम्यतीत्यत्रषत्वं बहुव्रीह्यभिधेयापेक्षावधित्वस्य सृजोनिरूपपदलक्षणस्य प्राग्युपसर्गोपलक्षस्य चाश्रयणेनादोषादित्याहुः । तन्निषेधादिति । ननु पदचरमावयवविधायकातिरिक्तस्यग्रहणादत्राप्रवृत्तिरेवस्यात् । नपदान्तेति सूत्रशेखरविरोधश्चेति चेन्नलोपसमाननिमित्तकपदचरमावयवविधायकातिरिक्तस्यतत्रविवक्षणमित्याशयात् । ननु कौलुतमित्येवदोषइति वाच्यंपिपठिषतेः क्विप्निमित्तकाल्लोपस्य कौलुसत्वाभावात् तस्यासार्वत्रिकत्वाच्च । पदसंज्ञानिमित्तकप्रत्ययनिमित्तकाभावादेशविषयत्वस्यवापरिष्कारेणादोषात् तस्मिन्प्रत्ययेपरेयोलोपःतस्मिन्प्रत्ययेपरएवकार्य्यैकर्त्तव्यइत्यर्थेवानदोषः तद्धितनिमित्तकलोपात्तिरिक्तलोपोनस्थानिवदित्यर्थोवा तेनपटयतेःपडित्यत्रजनयतेः जन्ततोजातइति लोपनेनजज्ञातइत्यत्रश्चुत्वंसिद्धमन्यथा निषेधाप्रवृत्त्यालोपस्य स्थानिवत्वात्तदनापत्तिरिति श्रूयमाणप्रत्ययनिमित्तकपदचरमावयवातिरिक्तइति वा निवेशनीयइति सुधियः । नुम्स्थानिकइति । शरितिप्रत्याहारग्रहणमत्रमानंतदभावे केवलानुस्वारोपलक्षणार्थमेवनुम् ग्रहणमावश्यकं शरग्रहणेतुकेवलानुस्वारस्यतत् घटकत्वेन ग्रहणेसिद्धेनुम् ग्रहणंसामर्थ्यात् तत्स्थानिकानुस्वारोपलणार्थंनुम् शुद्धस्तुनगृह्यते विसर्गसाहचर्येणायोगवाहस्यैव ग्रहणान् नुम्स्थानिकानुस्वारएवपर्यवसन्नइति बोध्यम् । तडिति । नन्वत्रसंयोगादिलोपेतस्यासिद्धत्वेन पुनःसंयोगान्तलोपस्यप्रा-

त्सिरेवेति चेन्न । तक्रकौण्डिन्यन्यायस्यत्रिपाद्यांस्वीकारेणादी-
षादेतन्मूलकमेवयं प्रत्यपवाद्यत्वंतस्यासिद्धत्वेनेत्युक्तम् । इद-
मेवत्रिपाद्यांन्यायप्रवृत्तौ मूर्द्धाभिषिक्तोदाहरणमित्यलम् । ष-
त्वस्यासिद्धेति । अन्यथाषढोःकइत्यापत्तिः तर्हितन्निमित्तलो-
पातिरिक्तनिवेशेपदस्यरमावयवेति नन्निवेशनोयमित्यपि लाघ-
वमिति । पडित्यत्रतुनदोषः श्रूयमाणतद्धितेति निमित्तत्वा-
दिति दिक् । विस्तरइति । ननु मधुश्चोततीति मधुगिति
कथमिति चेदयंसोपधःतेनसंयोगादिलोपइष्टसिद्धिरिति केचि-
त् । दिधगिति । ननु दिवहित्युपदेशाभावाश्रयणं नापिद-
हित्युत्तरखण्डस्योपदेशत्वम् । आगन्तूनामंतेनिवेशइति त-
स्यतत्वाभावात् । नच स्थानिवत्वेनविशिष्टेतत्वम् । स्थानेद्वित्वा-
नङ्गीकारात् । किञ्चस्थानिवत्वेनोपदेशोग्रहीतुमशक्यः । नचभ-
वतइत्यत्रादुपदेशत्ववदत्रस्थानिवत्वेन तत्त्वंस्यादेवतत्रप्रत्ययस्य
निमित्तत्वेनाश्रयणाददुपदेशप्रत्ययकालिकोग्राह्यइति तत्रस्था-
निवत्वेन तदाश्रयणेप्यत्रकस्यापिनिमित्तत्वेनानाश्रयणात् ।
उपदेशप्रत्ययकालिकस्यस्थानिवद्भावोपदेशस्यग्रहीतुमशक्य-
त्वेन हलन्त्यमित्यत्रैवस्वभावसिद्धोपदेशस्य गृहीतुमशक्यत्वा-
दुपदेशत्वाभावाद् ह्रस्वाभावएवप्राप्तइति चिन्त्यमिति । एवञ्च
दिधडितिजैमिनीयोक्तमेव युक्तमिति सुधियः । वसोः । व-
सुसादेशेनेति । नचैवमपि वसुस्तम्भइत्यस्यैव ग्रहणंस्यादिति
वाच्यम् । सामान्यग्रहणंनैकानुबन्धस्यधातोरपीति ज्ञापनार्थं
इति सकलेष्टसिद्धिरित्याशयात् । एतेनवसोःस्थानिवत्वेनैवोगि
त्वेलब्धउकारानुबन्धवसोःसामान्यग्रहणार्थंभविष्यतीति भा-

ष्यारूढमधिकसकारानुबन्धनोत् सञ्जनं ऽयर्थमित्यपास्तम् प्रत्ययाप्रत्यययोः प्रत्ययस्याङ्गीकारादिति केचित् । उकारोच्चारणसामर्थ्यादस्यापिग्रहणम् । अपिनाप्रक्रांतत्वादेकस्योपस्थितित्वादन्त्यस्यैव प्रत्ययस्यैवग्रहणौचित्याच्च । धातोरग्रहंपरिभाषांविनापिजातमित्यपिकेचिदाहुः । नन्वेवंस्र सइति साहचर्यात्तत्रसूत्रे धातोर्ग्रहणापत्तिः । अववसोरिति प्रत्ययस्यैवग्रहणात्तत्रापितस्यैवग्रहणौचित्यात् सांतेतिविशेषणाच्च नहिधातोर्विशेषणेफलमस्ति । सर्वंत्रसान्तस्यैव सत्वेनाऽव्यभिचारादिति दिक् । परेत्विति । वस्वेकेत्यस्यापि प्रतिपदोक्तत्वमितिचेत् । सदइत्यवस्थायामेत्वलोपाभ्यामेव प्रतिपदोक्तत्वात् । संप्रसारणेनबाधइत्यन्यत्रविस्तरः । पुंसो । वस्तुतइति । गौरवादेतदुक्तंयुक्तंभवति । अदसः । प्रसिद्धेरिति । नच तकन्यायेनसिद्धिरित्यादिसिद्धयेतदादिविषयेतदप्रवृत्तिस्वीकारात् । नन्वनन्त्यग्रहणप्रत्याख्यानइदमेवेति नियमेप्रकृतेऽत्वं यदिस्यात् । दकाराभावेनसनियमोऽसङ्गतःस्यादतस्मासथ्यादित्वंन प्रवर्ततइत्यदोषः किञ्चपरत्वात्सत्वेसकृद्गति न्यायेनत्यदाद्यत्वमिति सुवचमेवेति चेन्न । तत्प्रत्याख्यानपक्षमादायैतत् ग्रन्थप्रवृत्तेः वस्तुतस्त्यदादीनामइत्यत्रविभक्तीति विषयसप्तमीविहितविशेषणादिगौरवात् सैवचिन्त्यमित्युक्तत्वात्।एवञ्चसकारस्यात्वेपररूपऔडादेशेटिलोपइति न्यायेनपुनरत्वाप्रवृत्त्याऽदोषात् । नच्चपररूपात्पूर्वमेवान्तरङ्गत्वाल्लोपेऽसकावित्यत्रटाप्यौङः श्याद्यापत्तिरौकारविभक्तित्वादिति वाच्यं द्विवचनौकारविभक्तेरेवौङिति संज्ञास्वीकारात् प्रत्ययस्थादितो-

त्वापत्तिरितिचेत् डित्वसामर्थ्यात् पररूपानन्तरमेव टिलोपस्यवक्तव्यत्वादन्यथा सोरौदित्येववदेदेवं चेदंचिन्त्यमित्याहुः । नमुने । ननु मुग्रहणंमास्त्विति चेन्न । पञ्चानाममुनेत्यत्रनाभावेकृतेनलोपस्यान्यथासिद्धत्वनिषेधापत्त्याऽर्थान्तरत्वेनामेवांवर्णमिति स्वरापत्तेः नेकृतेऽव्यवहितस्यैवासिद्धत्वनिषेधइति नदोषइति चेदत्रनइत्यस्यविषयसप्तमीत्वेनौपश्लेषिकसप्तम्यभावेन तस्मिन्निति परिभाषाया अप्रवृत्त्याऽव्यवहितत्वांशस्यलब्धुंशक्यत्वादिति दिक् । इति हलन्ताःपुल्लिङ्गाः । पक्षइति । पदस्यादिरिति पक्षेतुगतिकारकेतिकृदन्तेनसमासेपदत्वाभावेननिषेधोनेतितत्त्वम् । वस्तुतः पञ्चमीसमासेनहुसैनाविल्यत्रनिघातापत्तिरिति बोध्यम् । अपो । व्याख्यानादिति । सानुबन्धकपरिभाषायाउभयोः सत्वेशास्त्रीयग्रहणमत्रतुलौकिकएवसम्भवतीति भावः । नच प्रत्ययाप्रत्यययोरिति न्यायेनदोषः । तदभावादद्भिरितिनिर्देशाच्चेत्याहुः । इति हलन्ताःस्त्रीलिङ्गाः । उत्तरपदत्वे । ननुकार्यित्वनिवेशेफलसत्वेपि प्रमाणाभावइति चेत्पदादिविधाविति पर्युदासएवावेहि । तथाहि पूर्वकालाव्यवहितकालवृत्तिर्हिपदादिविधिर्यथासेचइति सकारस्यपूर्वकालाव्यवहितकालवृत्तित्वं। एवञ्चतत्साहचर्य्यात्परकालाव्यवहितकालवृत्तिरूपपदान्तकार्यएव तथाच कार्यित्वनिवेशोऽर्थात्कलितः यद्वाऽलाभावृत्तित्वेनसाहचर्य्यंयथासइत्यत्रप्रागभाववृत्तित्वं तथाचध्वंसवृत्तित्वंपदांतकार्यएवेति नपदव्यवायेपीत्येतद्विषयेप्रवृत्तिः । अभावप्रतियोगित्वेनवासादृश्यमिति नदोषः । न च पदादिविधिर्नान्तेत्यादौणत्वविधौ

पूर्वस्याभावेन पूर्वकालाऽव्यवहितकालवृत्तित्वं बाधितमिति वाच्यम् । उत्तरपदकार्येपदादिविधेस्तथात्वेनादोषात् । ननुपदप्रयुक्तकार्यउत्तरपदीयेकर्त्तव्येपूर्वपदीयपदत्वस्यापि निषेधादिति चेन्न । उत्तरपदीयेनेति निवेशेनोत्तरपदसंबन्धिनिकार्यइति निवेशेनवादोषात् । अलत्यकार्यित्वादिफलमुक्तं ङमुट्सूत्रे । अनभिधानमिति । अभिधानेहिगतिकारकेतिसुबुत्पत्तेः प्राक्समासेऽपदत्वादनिष्टः स्यादिति भावः । नसलिखितइति । ननु मधुशब्दाद् यञन्ताद्बहुवचनेजसियञोलुकिह्रस्वस्यगुणोभवति तत्रपदत्वादेङः पदान्तादिति दुर्वारंनचानेननिषेधउत्तरपदत्वाभावादेतत्प्रत्याख्याने तुयजादौसर्वनामस्थानेपूर्वस्यपदत्वनिषेधेनादोषादिति चेन्नोत्तरशब्देनोत्तरपदंनलक्ष्यतेकिन्तुवृत्तिचरमवर्ति तथाच प्रकृतेनिषेधसौलभ्यमिति बोध्यम् । युक्तञ्चैतदन्यथाप्रत्याख्यानेऽस्मादेवाचारक्विपि शपिमधवतिशंभवतीत्यत्रगुणेकृतेपूर्वरूपापत्तिरत्रसर्वनामस्थानाभावेन तस्यनिषेद्धुमशक्यत्वात् । मन्मतेवृत्तिचरमएवसइति निषेधःस्पष्टैवेति दिक् । संबध्यतइति । ननु तत्सम्बन्धएनयोरित्यत्रचारितार्थ्यात् सामर्थ्याल् लुकालुप्तेतीत्यसङ्गतमिति चेन्न । प्राचीनानुरोधित्वात् । तस्यस्वसतेह्येकवचनएवेति बोध्यमिदमत्रतत्त्वमेनोनवक्तव्यः । न च तत्रन्यायेनत्यदाद्यत्वबाधःत्यदादिविषयेऽप्रवृत्तेरुक्तत्वाद् यदिसोपि नदोषावहः एनदेवकर्त्तव्यइति भगवतःसिद्धान्तस्तत्रैनदेवकर्त्तव्यइति शङ्कितेऽपरेयद्येनत्क्रियतेतर्ह्येनोपि नकार्यइति तदुपर्युपहासपरतयातत्सार्थक्यादिति सुधियः । ननूपसर्ज-

नेतकारचारितार्थ्यमतः सामर्थ्याभावइत्यत आह । अनयो-
रिति । अहन् । निषेधेनापीति । अपिनातक्रन्यायः । ननुनि-
षेधविषयेचारितार्थ्यात् तक्रन्यायोनदृष्टइति चेन्न ब्राह्मणे-
भ्योदधिदीयतांनरात्रौ तक्रङ्कौण्डिन्यायेत्यत्रबाधदर्शनात् ।
नच वाक्यद्वयकार्येवाक्यत्रयकरणसामर्थ्याद् बाधोस्त्वत्रकि-
ङ्कमकमिति वाच्यम् ब्राह्मणेभ्योगौडेभ्योदधितक्रं श्मश्रुम-
लंवइत्यत्रवाक्यद्वयेपि बाधदर्शनात् । अप्राचीनंग्रामानहत्वा-
आम्नायेवर्हिणस्तेन्यग्रोधाइत्यत्रचदर्शनात् । ननु नङीति नि-
षेधंपर्यालोच्यनलोपइत्यस्यसङ्कोचेप्राप्तिरपि दुर्लभेतिचेन्न । स-
ङ्कोचस्यवाक्यार्थकालिकत्वेन वाक्यार्थात्पूर्वमेवच व्याप्यव्या-
पकज्ञानसत्वेन पूर्वंशास्त्रस्यैतद्वाधज्ञानादेतद्विषयसङ्कोचसुलभ-
तयादोषान् निषेधशास्त्रस्यचप्रतियोग्यपेक्षत्वेन पूर्वन्तत्सङ्कोचा
भावात् नचाहयतेःक्विप्यहइत्यत्रनान्तत्वाभावात्कथंनान्तप्रा-
तिपदिकत्वमहञ्शब्दइति वाच्यम् । पदान्ताहञ्शब्दस्यसर्व्व
त्रनान्तस्यैवसत्वेन तस्यतद्व्याप्यतायाः सौलभ्यादिति दिक् ।
विभावयन्तुसुधियः । ऊर्गिति । इयमूर्जीतिवैदिकप्रयोगात् ।
अस्यस्त्रीलिङ्गत्वेनपुंनपुंसकयोरेवेति नप्रमाणमिति क्विबत्रकर्त्त
रि।वहूर्जीति। नन्वतइत्येवक्तुत्वातस्यैवानुवृत्त्यासिद्धेप्रत्याहारग्र-
हणंव्यर्थमिति पूर्वपक्षश्चेदयमपरोक्तइति तत्वमचइत्यनुकृष्ये-
कइति नकार्यमिति तुनौङ्ङ्यामित्यारम्भेण सन्निपातेनपर-
त्वेनौङ्भ्यसोः स्वदोषेपि सप्तम्येकवचनेकारान्तेपि नुमापत्ते-
रिति दिक् । षाण्मासिकइति । अयमपपाठः । ठनिष-
ण्मासिकइत्यपेक्षितत्वान्नुम्नेति । वस्तुतःसर्वनामस्थानत्वमे-

वन नपुंसकत्वादिति चिन्त्यम् । अश्वेति । समासेभूतश-ब्दस्यपञ्चशतपरत्वमेवमक्षिशब्दस्यविंशतिपरत्वम् । अन्यथा भूतादेःपञ्चद्विसप्तसंख्याकत्वेन चतुर्दशसंख्यात्वस्यैवापत्तेः । आच्छी । परोयःशतेति । इदमेवयुक्तम् । अन्यथाशतृभिन्ना वयवेत्यर्थेपि शत्रकारेसमुदायावयत्वमादापत्तिरेव स्यादिति श तृभिन्नावयवोर्थवान्ग्राह्यइत्युक्तेगौरवंस्यात् । पूर्वान्तत्वेनत-स्ययत्रार्थवत्वं तत्रैवप्रवृत्तिरन्यत्रतुनेतिकल्पनंचेति नचत्वन्म-तेव्यपवर्गाभावः परत्वेनदृष्टोयःशतेति व्याख्यानेनादोषात् । उक्तगौरवेणास्याकिञ्चित्करत्वात् । इत्याहुरित्युक्तभाष्यद्वय-विरोधः कथं परिहार्यइति चिन्त्यम् । अन्येतुच्छदिष आकृ-तित्वंतृणेष्वेव प्रसिद्धमिति छदिरुपधीत्यस्यप्रतिपदविधित्वेपि च्चर्मणितदप्रसिद्धेः प्रतिपदविधित्वाभावाच्चर्मणोञित्यस्यपर-त्वात्तत्प्राप्तौ पूर्वविप्रतिषेधारम्भइत्येकेऽत्रपरिहरन्ति अन्यत्र-शीघ्रोपस्थितिकत्वान्नित्यविहितैष्ठच्प्रभृतिभिः कपोबाधसम्भ-वेपि तथाविधकब्विधेरप्रवृत्तिपक्षऊर्ध्वजानुरित्यत्रपाक्षिककपो-निष्टस्यापत्तौ भाष्यतात्पर्यान्नसः किन्तुहुस्वौद्विमेतिपाक्षिको-जुरित्याहुः । अपरेतुलोहितान्मणावित्यनेन पुंसिचारितार्थ्येन स्त्रियांप्रतिपद्विधानमात्रालिङ्गबोधकप्रत्ययबाधेप्राप्तेक्रियमाणा ल्लोहिताल्लिङ्गबाधनंवेति तद्वार्तिकतद्विरुद्धोक्तभाष्येद्वयेप्येकदे-श्युक्तित्वंकल्पयतः तुल्यन्यायात् प्रकृतेप्राप्तस्यापिदीर्घस्याकृ-तव्यूहपरिभाषयानुमकारनिष्ठोपधात्वस्यविनाशोन्मुखत्वेन दी-र्घाप्रवृत्तेः । स्वंपीत्येकमेवेत्याहुः । इति नपुंसकलिङ्गाः । स्वरादि । आपतेरिति ननुचादयआवृ्दात्ताइत्येवं पाठेनतत्र-

नदोषः ननु स्वरादयोऽसत्वइति पाठेस्वरादीनामसत्वएवाव्य-
यत्वापत्तिरव्ययमिति महासंज्ञयासिद्धान्तेप्यसत्वएवेष्टत्वात् स
त्ववाचकानान्तु क्वचित्सतिगमकएवेति नदोषइति चेन्न। त-
त्रचचादयइति पदद्वयकरणेननिपातप्रदेशेषु चादिपाठेनगौर-
वापत्तेः यदिसंज्ञाप्रदेशेषु निपाताइत्यव्ययमित्युच्यतेतदानसि
द्धान्तेनसममेव स्वरादिसूत्रेनिपातग्रहणंनकार्यमिति त्वत्रप-
क्षेलाघवंनचोपसर्गादीनामाद्युदातानापत्तिश्चादित्वाभावादि-
ति वाच्यम्। चादिगणएवोपसर्गाइत्यारभ्याधिरीश्वरइत्यतः
पाठेनचादित्वसिद्धेः प्रादयइति चनकार्यमिति चलाघवं नच
चादीनामप्युपसर्गगत्योरप्यापत्तिरुपादिग्रहणस्यनियमार्थत्वा-
द् नच कर्मप्रवचनीयेष्वप्युपसर्गगत्योरप्यापत्तिरुपसर्गादीनां-
गणेपाठत्वेननिपातवत् कर्मप्रवचीयत्वाप्राप्त्यापि समावेश-
इति वाच्यम्। कर्मप्रवचोयाइत्यत्रकर्मप्रवचनीयाएवेति पठि-
त्वागत्यादिबाधसिद्धेरन्ययोगव्यवच्छेदोह्येवकारेण स्वघटित-
पदत्यागएवनिवेशेचकिंलाघवमिति चेदेकंपदंकार्यमिति शेष
इदमत्रतत्वम्। स्वरादयोव्ययमित्येवसूत्र्यताञ्चादयोपि त-
त्रैवपाठ्याःचादौ प्रादयएवोपसर्गाइत्येवकारेणोपसर्गादिबा-
धश्चादीनाञ्चादयआद्युदाताइत्येवचपाठ्यम्। असत्वइति।
पठित्वाचादीनांपाठःकार्यःतत्रकर्तव्यं वा तथाचचादयोऽसत्व-
इति प्राग्रीश्वरान्निपाताइति स्वरादिनिपातमित्यत्रनिपाताइति
नचकार्यमिति। एतत्पक्षेनिपातपदमनुक्तमपिलाघवं निपात
एकाचइत्यादिषुचादयइति पाठेचगौरवेपि सप्तपदाकरणाद
मात्रालाघवंत्वतिशयितमेव नच संज्ञाकृतलाघवं तदनाश्रय-

णस्योक्तत्वात् ननु स्वरादिषुचादिपाठेस्वरादेराकृतिगणत्वाद-
तिरिक्ताव्ययानामसम्भवेपाठेतेषांचादित्वस्याप्यापत्त्याद्यु द्दा
त्तापत्तिरिति चेन्न । आकृतिगणेऽन्त्यएवपाठ्यइत्यत्रविनि-
गमकाभावेनचादितः पूर्वमेवतेषांपाठेनादोषादिति प्रक्रिया-
चातुर्यंवतांपरममधुरइति भात्सर्यमुत्साय्यंविचारयन्तुसुधियः।
सत्ववाचकत्वइति । स्वरादिषुसत्ववाचकत्वेप्यव्ययत्वस्वीकारा-
दिति चिन्त्यमिति । पाठकस्तुचिन्त्योगमकएवतत्स्वीकारात्
वामिति यद्यपि विभक्त्यन्तार्थेनन सादृश्यन्तथापि प्रकृत्य-
र्थेनतत्वम् । तत्तदर्थेति । यद्यप्येकस्यैवद्विरुक्त्यापीदंसिद्धंत-
थाप्येकतच्छब्दस्य प्रकृतिपरत्वेनैकस्य प्रत्ययपरत्वेनतदसम्भ-
वः नच तद्धितोरित्यत्रतदित्यस्यनस्यादित्यर्थकेनप्रथमान्तचि-
दित्यनेनसामानाधिकरण्याभावाद्द्वन्द्वोदुर्लभः परिनिष्ठितवि-
भक्त्यासमासेनादोषात् नहि द्वन्द्वसूत्रेशेषइत्यस्यानुवृत्तिर्येन
प्रथमान्तानामेवसस्यादिति भावः । अत्रकेचित् । यद्विभक्ति-
समानानुपूर्वीकत्वंतद्विभक्तिसमानार्थकत्वमेव प्रत्यासत्येति-
वामित्यादीनां पाठंविनाऽव्ययत्वानुपपत्तिरित्याहुः । साधीय-
इति । यश्चसाधीयइति । भाष्यात् । सर्वेति । अत्रविभक्ति
पदंत्रित्वेपर्यवसन्नंप्रत्येकमेकवचनादाविति भावः । द्वितीयै-
वेति । द्वितीयायाः कर्मत्वमेवार्थंतात्पर्यादर्थापेक्ष्यत्वम् । त्रया-
णामिति। अन्यथाकपिञ्जलाधिकरणन्यायेनायमेकइमेत्रयइत्य-
पेक्षाबुद्धिरेव चतुष्टयजनिका प्रथमोपस्थितित्रित्वावच्छिन्नबो-
धनेनैवबहुवचनसार्थक्येतद्वैयर्थ्यंस्पष्टमेव अत्रेदन्तत्वम् । सर्वं-
विभक्त्येकवचनत्वाङ्गीकारेगङ्गाया आनयेत्यतःसर्वविभक्त्येक-

वचनापत्तिर्नहितथात्वानुभवः । तस्मादेकैवविभक्तिस्तत्रस्व-स्थित इत्यत्रसप्तम्येवस्वर्गतइत्यादौ पञ्चम्येवएवंचसुबित्या-दौहिप्रत्याहारश्चरितार्थः तत्रतत्रसप्तमीपञ्चम्यादेर्लुगर्थत्वात् त्वदुक्तासर्वविभक्तित्वमयुक्तमुक्तयुक्तेः नच येषामपादाना-दिर्नास्तितेषांतु सर्वैकवचनापत्तिरिति वाच्यम् । अर्थप्र-थमेत्येववक्तव्येप्रातिपदिकग्रहणात् प्रथमैवेत्यदोषात् । कर्मा-दियोग्येत्यर्थस्तुनप्रातिपदिकपदवैयर्थ्यापत्तेः किञ्चपचतिकल्प मित्यादौ सदुर्वारःविशिष्टकर्तृत्वस्यकेनाप्यनुक्तत्वात् ।कृन्मे। संज्ञायाअपीति । अतएव तेभ्यएषामित्यादिसिद्धिराद्ये ये-नविधिस्तदन्तसंज्ञांप्रतित्यदाद्यत्वस्यासिद्धत्वापत्त्यादन्तत्वाप-त्तिः । अन्त्येगुरुसंज्ञाम्प्रतिदीर्घस्यासिद्धत्वात्तस्या अप्यनापत्तिः वस्तुतोऽव्ययीभावश्चेत्यत्रसामर्थ्यान् महासंज्ञायास्त्यागेप्येत-द्विषयेमहासंज्ञायास्त्यागेमानाभावइति सुधियः । अयंभाव-इति । नन्वस्यवस्तुतःकल्पेननवैलक्षण्यम् । अतएवध्वननपर-त्वेन तदर्थलापनंकुर्वन्तीति केचिदिति चेन्न । अयंभावः । क-ल्पेसामानाधिकरण्यसम्बन्धेनलिङ्गान्वयित्वंविशिष्टस्यनकेवल स्येत्याशयः द्वितीयेकेवलस्यापिनेत्याक्षेपाद् ननु तथापि वस्तु-तोग्रन्थेनातएवेत्यसङ्गतं तत्प्रत्याख्यानरीतेरभावादिति चेन्न-सर्वनामसंज्ञासाहचर्येणास्याप्यन्यार्थत्वेन प्रत्याख्यानेनादोषा-त् प्रधानन्यायोपन्यासस्तुचिन्त्योवृद्धोयूनेत्यादिगमकएवतत्प्र-वृत्तेरिति दिक् । उच्चैराविति । अकारोवासुदेवस्तस्मादौ प्रत्य-यःपरादित्वेन सुप्त्वएवमिदम् शब्दात्भ्यामिद्वितीयमपि नच समासउपसर्जनत्वमेवेति वाच्यम् । कुगतिसमासउभयपदा-

र्थप्राधान्यात् उच्चैराभ्यामित्यादावदोषात् । ननु प्रत्ययग्रहणपरिभाषयैवात्र लुक् न प्राप्नोतीति कथमनभिधानमिति चेन्न । अन्त्ये स्त्रीप्रत्यये चानुपसर्जनेनेति निषेधादिति कश्चित् प्रत्येकमेवेति स्वरे विशेषादिति शिवम् । हयग्रीवपदाम्भोजद्वन्द्वकारुण्यमूर्त्तये । मयाशेखरचन्द्रस्य रचितावरचन्द्रिकाचन्द्रिकाया अव्ययानि समाप्तानि । शूद्राचेति । निरूपितमिति । नच महाशूद्रसमुदायस्य निषेधेप्यवयवाट्टाप् स्यादिति वाच्यमसत्पूर्वग्रहणवैयर्थ्यापत्तेः नच समुदायनिषेधेऽवयवादुत्पत्तौ ढगवत्र वादेवेति तत्फलमिति वाच्यं स्त्रीवाचकेभ्य इत्यर्थे समुदायादवयवाच्च प्राप्तौ वृक्षप्रचलनन्यायेनावयवादनुत्पत्तेः । नच कुम्भकारेयोप्यापद्येतेति भाष्यविरोध एतन्न्यायेनाऽवयवादनुत्पत्तेरिति वाच्यं स्त्रीप्रत्ययान्तादित्यर्थस्यैव सिद्धान्तत्वात् परन्तु अनुपसर्जनाधिकारेण तदन्तविधौ महाशूद्रीति न स्यादित्यमहदिति निषेधः नच शूद्रशब्दार्थस्य स्त्रीत्वाभावः । महाशूद्र इति । स्त्रीत्वविवक्षायामपि नागेशमते टाबनापत्तेः । नचादन्तलक्षणटाप्ङीषाबाधात् वस्तुतो विवक्षादिकमप्रयोजकम् । उपजनिष्येति न्यायेन समासात् प्राक्टाबनुत्पादादवयवे जात्यारोपेण जातिसत्त्वाट्टाप् स्यादेवेति चेन्न । प्रियामहाशूद्रायस्येति विग्रहे यत्स्त्रीप्रत्ययान्तं शूद्रेति न तदुपसर्जनमिति ह्रस्वो न स्यादित्यत्र बोध्यं महाशूद्रान्ङीबवयवाट्टाप् च स्यात्तत्र यस्येति लोपेपि वृक्षेति न्यायस्य फलभेदेऽप्रवृत्तेर्ढगापादानशङ्केति बोध्यं । कुक्कुटाण्डेति नच वार्तिकाभावे कुक्कुटाण्डमिति स्यात् प्रत्याख्यानभाष्येणानभिधानात् । टाप्वृत्तिविशेषात्सूत्रभाष्येति । नच

परत्वाट्टाबृचीत्यस्यापवादतेति वाच्यम् प्रत्याख्यानभाष्येण पूर्वविप्रतिषेधाङ्गीकारात् । सूत्ररीत्येष्टस्येति । पादन्तकृत-समासांतस्यानभिधानेद्विपदीति सामान्यतोऽपि नसिद्धेदिति भावः । नच सूत्रवैयर्थ्यमिति ऋच्येवानभिधानेसूत्ररीत्येति-ग्रन्थासङ्गतिरिति वाच्यम् सूत्रमतेद्विपदीति सिद्धंकृत्वा-पश्चादृगिति लापनेसिद्ध्यतितन्नसिद्धे दित्यर्थात् । नचैवमे-कपादिति सिद्धंकृत्वाऋगितिलापनेसूत्रमतेपि तत्सिध्यतीत्य-नभिधानशङ्कासङ्गतिरिति वाच्यम् । अस्यग्रन्थस्यचिन्त्य-त्वाद् वस्तुतोऽभावपर्यन्तव्यापारस्य लक्षानुरोधेनव्यवस्थित-तयात्रतदभावएकपदीऋगभावपक्षेटाबिति सूत्रकारमतेङीब-न्तस्यासिद्धिरित्याशयः। त्यकनोकरस्येति। तिकनीकारकरणेननेति भाष्यम् । नच प्रक्रियालाघवेन तथाकरणंप्रथमोपस्थिता-कारत्यागेबीजानापत्तेस्तादृशलाघवानादरात् प्रत्ययस्थानच-सर्वाइति कृत्वानन्तरमकचिपूर्वत्वेन दृष्टस्यकार्याभावेनस्था-निवत्त्वाप्रवृत्तौ तत्राव्यवधानेचारितार्थ्येन कारिकेत्यत्रस्थानि-वत्त्वेन व्यवधानान्नस्यात् समर्थानामित्यनुवृत्तेरितरत्रनव्यैरु-क्तत्वात् कृतसन्धेःकार्योचितत्वादिति वाच्यम् क्षिपकदी-नांचेति निषेधाज्ज्ञापकाद्व्यवहितेपि प्रवृत्तेः। अत्रेदन्तत्वम् । आपियः ककारइत्युक्तेसामर्थ्याज्ज्ञापकेनवैकवर्णव्यवधानं-सिद्धम् । आपियोऽकारइत्युक्ते तुवर्णद्वयमुदीचांनचस्त्रीबो-धकाकारस्य साङ्काश्यकेऽभावोवुनस्तत्रशक्तेरभावादामति-क्रान्ताऽस्याऽज्ञाताअल्पाऽत्यकेत्यादौच ङ्याब्ग्रहणेदीर्घइत्य-स्यप्रत्याख्यानअकारस्यस्थानिवत्त्वेन स्त्रीबोधकत्वान्नदोष इति

वाच्यम् । तद्रूपयोगाभावात्प्रत्याख्येयमेवेत्याशयादुदीचामापोयकाभ्यामिति वक्तव्यमेव नच प्रतिपदोक्तआपोन्यतरस्यामिति ह्रस्वएवस्यादिति वाच्यम् । आर्यकेत्यत्रापि ह्रस्वंबाधित्वाऽस्यप्रवृत्त्यादोषाद् बहुचटकिकेत्यत्रह्रस्वाभावेनास्यचारितार्थ्येन बाधनायोगइति वाच्यमेवञ्चेदतइति नानुवर्तते तथाचार्य्यकेत्यत्रस्थानिवत्वेनाप्त्वाददोषात् ङ्याब्ग्रहणइति तु प्रत्याख्यातमेवान्येतुस्विक्षुच्छापिकेत्यत्रविकल्पः स्यात् सिद्धान्तेतु स्त्रीबोधकेत्यस्यार्थस्यासिद्धान्तितत्वेन नपुंसकादेशस्यस्थानिवत्वेन विशिष्टेस्त्रीबोधकत्वेप्यवयवअभावान्नैत्वविकल्पः। नच समासेऽवयवगतस्त्रीत्वं तथासत्यर्द्धपिप्पलीत्यत्रावयवनिष्ठनपुंसकत्वेन ह्रस्वापत्तेःवस्तुतस्त्वार्यकेत्यत्रस्थान्यर्लनिष्ठत्वेनाप्त्वन्दुर्लभमिति केचित् परेत्वित्यकेत्यत्रापोऽभावेन विकल्पानापत्तिरित्याहुः । अत्रफलभेदान्ङ्याब्ग्रहणेऽदीर्घइति प्रत्याख्यानासम्भवइति तत्वम्। अनुपसर्जनात् । आचारक्विवन्तेति। नच कर्तृक्विप्यतोलोपअदन्तत्वाभावादेवादोषइति वाच्यं गौरादिपठितानडुहइत्यादिक्विबन्तस्यानभिधानमित्याशयाद् नचोपसर्जनत्वं स्वार्थविशिष्टार्थान्तरबोधकत्वम् । अतएवतदोरिति सूत्रेद्दइति प्राप्नोतिस्वइति चेष्यतइति भाष्यस्यैकदेश्युक्तित्वकल्पनाऽभावः । एवञ्चोपसर्जनत्वाभावः प्रकृतइति वाच्यम् । अर्थान्तरवत्त्वेनदृष्टंयत्स्वार्थबोधकत्वं तद्रूपोपसर्जनत्वात् । वस्तुतोदृष्टपदनिवेशेमानाभावः । तदोरिति सूत्रस्थभाष्यविरोधश्चेति बोध्यम् । पञ्चगवधनइति । नच राजपुरुषेकार्यकालेनलोपार्थंदृष्टस्येतरानपेक्षत्वस्यग्रहणेदो

षएवेति वाच्यं तत्रयथोद्देशेनैवनिर्वाहेदृष्टपदनिवेशाभावेनप्रातिपदिकत्वात् । रूपमित्यर्थइति । यदिभावसाधनविधिशब्दस्तदापंक्तेरलग्नतास्यादतः कर्मसाधनेनतदन्तशब्देनकर्मधारयस्तथाच तदन्तंयद्विधीयमानमण्णतान्तमित्येवंरूपमित्यर्थः । प्रत्ययविधाविति । नचविशिष्यतत्तद्रूपेणोपादानएवग्रहणवर्तेति निषेधप्रवृत्त्यानज्ञापकतेति वाच्यम् । षिद्गौरेतिसूत्रेविशिष्योपादानात्तदानात्रफलमित्याशयात् । नचतथापि नज्ञापकतेति कुम्भकारेयापादनभाष्यासङ्गतिरिति वाच्यम् । एतद्भाष्यप्रामाण्येनविशिष्यैत्यस्याचिन्त्यत्वात् । अनन्वयापत्तेरिति । नचैरपत्यंस्त्रीत्यादौसम्भवइति वाच्यम् प्रत्ययग्रहणइत्यस्य वाचनिकत्वेन तस्यानेननिषेधाभावादितितत्वं । कुम्भकारेयइति । ननु स्त्रियामिति गृह्यमाणविशेषणाद् नदोषोबहुकुरुचरेत्यादौ नाप्यतिधीवरीतिफलंशूद्राचेतिज्ञापकेनसिद्धेः। नचशूद्राचेतिज्ञापकेनबहुकुरुचरेति व्यावर्त्यमेवेति वाच्यं तथापि ज्ञापकतासंगतेः किञ्चशूद्राचेत्यनेनतत्सूत्रएवतदन्तज्ञापनं।अतिधीवरीति तुबहुव्रीहौवेति ज्ञापकात् तत्सूत्रन्तदन्तंयत्तुतेनचात्रसिद्धंकुम्भकारेयस्यापि निष्कृष्यैकार्थीभावाभावेवृत्त्यभावेनानापत्तिः नचपरमगार्ग्यायणइति भाष्यादस्माच्च तदभावेपिवृत्तिः तथासत्यपि वृक्षप्रचलनन्यायेन समुदायादेवोत्पत्तिःस्यात् नचफलभेदेवृक्षप्रचलनन्यायाऽप्रवृत्तिः वभूवेत्यादावपि तदप्रवृत्तौदोषात्फलभेदेपि तत्प्रवृत्तिरित्यङ्गीकारात् किञ्चपारिष्कारिकार्थवत्वाभावेन प्रातिपदिकत्वाभावादेवनदोषः नच मूलकेनोपदंशमित्यत्रप्रातिपदिकत्वार्थनियतसमभिव्या-

हारातिरिक्तस्य तन्त्रग्रहणेनार्थवत्त्वमेवेति वाच्यं निपातस्यानर्थकस्येति स्थानेऽव्ययस्येतिपठनाददोषात्। नचभाष्यप्रामाण्यादर्थवत्वं तर्हि नियतसमभिव्याहारातिरिक्तेविशिष्टस्यस्त्र्यर्थवाचकत्वेनावयवस्यस्त्र्यर्थवाचकत्वाभावेनादोषाद् नचैतदप्यारोपितंवर्ततेभाष्यादिति वाच्यं तर्हिवृक्षेति न्यायेनैवदोषदानस्यसुवचत्वात्। नचावयवादुत्पत्तावपि विशिष्टस्यापि प्रकृतित्वेनोभयोर्वृद्धौ दोषोनेत्युक्तन्यायेन खण्डनमसङ्गतमिति वाच्यं धाटचकाशयेदोषतात्पर्यात् तत्रोभयवृद्धौदोषादिति चेन्न वृक्षेतिन्यायस्यैतद्भाष्यादप्रवृत्तेः। नचकरोतीति करःकुम्भस्यकरेति टावन्तेनसमासेऽवयवादेवोत्पत्तौ कुम्भकारेयोगलोपतितइति वाच्यम्। गतिकारकोपपदानामिति पूर्वसमासेनन्तरंटापितदभावात् षष्ठीशेषइत्यस्यापि कारकत्वाङ्गीकारात् नन्त्रसेनान्तलक्षणकारिभ्यश्चेतिण्येनबाधाड्ठगेवनेङ्डी वाच्यं विशेषविहितत्वेनढकएवप्रवृत्तेः यद्वा कुम्भकारीवमनुष्यःकुम्भकारीतस्यापत्यमित्यर्थेस्त्रीभ्योढगित्यस्यस्त्रीप्रत्ययान्तादित्यर्थेऽवयवाङ्डीप्यवयवेनिष्कृष्यैकार्थीभावाभावाड्ढगनुत्पत्तौ कौम्भकारेयोनसिद्ध्यतीत्यनुपसर्जनाधिकाराभावेदूषणं नचस्त्रीभ्योढगित्यत्रस्त्रीवाचकादित्यर्थेनादोषइति वाच्यं कन्नन्तस्यबहुव्रीहौ ह्रस्वानापत्तिरनुपसर्जनाधिकाराभावेविशिष्टस्योपसर्जनत्वेप्यवयवस्योपसर्जनत्वाभावाद् यदिशास्त्रीयमुपसर्जनंतत्रगृह्यते तर्हिप्रत्याख्यानंवरमिति दिक्। नचटिड्ढेतिसूत्रेतदन्तग्रहणंकर्तव्यमिति वाच्यं तथासतियदितदन्तेस्त्रियामिति विशेषणंतर्हिबहुकुरुचरेतिदूषणं यदिगृह्यमाणस्य तदाऽऽपिशलेति-

दूषणंसिद्धान्तेत्वनुपसर्जनादिति गृह्यमाणविशेषणादुभयंसिध्यतीति बोध्यम् । अर्थवत्त्वाभावेनेति । नचानुपसर्जनाधिकाराभावेऽवयवस्याप्रातिपदिकत्वेन ङीबुत्पत्तिःकृतेदानीन्तुतदभावइति विरोधइति वाच्यं तदधिकाराभावईदृशार्थवत्त्वग्रहेप्रमाणाभावात्तदधिकारसत्वेतेनेदृशार्थवत्त्वज्ञापनादितिच बोध्यम् । निष्कृष्यैकार्थीभावत्वञ्चापत्याद्यर्थान्वयितावच्छेदकावच्छिन्नवृत्तिमत्त्वं नचविशिष्टंशुद्धान्नातिरिच्यतइति न्यायात्केवलेप्यन्वयितावच्छेदकावच्छिन्नइत्यत्रपर्याप्तिमत्त्वस्य निवेश्यत्वात् । असहायएवेति । तत्वञ्चातिदिदिक्षितधर्मावच्छिन्नासमभिव्याहृतत्वंधर्मश्च स्ववृत्तिधर्मनिरूप्यःतेनरामइत्यत्रनसर्वशब्दत्वातिदेशःसर्वशब्दत्वस्य रामशब्दत्वनिरूपितत्वाभावात् । नचासमभिव्याहृतत्वमिति मास्तुदरिद्रेत्यत्रतत्वाभावान्नदोषः । अन्तत्वञ्चस्वघटकप्रागभावानधिकरणत्वमितीकारवृत्तिनिरूप्यत्वं नास्तीति वाच्यं तदनधिकरणकत्वरूपाऽकारवृत्तिधर्मस्याभावइकारेस्तीति तादृशाभावरूपेकारवृत्तिधर्मेणतदनधिकरणत्वरूपाकारवृत्तिधर्मप्रतियोगित्वस्यनिरूपितत्वावदेवाश्रीयते नच तदधिकरणभिन्नत्वमिति स्वस्मिन्स्वभेदानङ्गीकारेण नान्तत्वमिकारस्येति वाच्यं पूर्वोक्तरीत्याऽप्यन्तत्वस्यानेतुंशक्यत्वादतोऽसमभिव्याहृतत्वमि।एवंचैकदेश्युक्तित्वमावश्यकमेव वस्तुतएकस्मिन्नित्यस्यैकव्यक्त्याऽभिन्नइत्यर्थः । नत्वसहायइति । व्यपदेशश्च विशिष्टवैशिष्ट्यंतथाचैकव्यक्तिभिन्नेविशिष्टवैशिष्ट्यवत् कार्यविशिष्टत्वंचघटकत्वघटितत्वादिरूपम् । अस्यापत्यमिरित्यादौ घटकत्वातिदेशे-

र्थात्तदनधिकरणकत्वरूपमतत्त्वमिति लक्षणसमन्वयइत्यर्थे-त्यादौच घटितत्वातिदेशेर्थादवयवित्वप्रतीतिः दरिद्रे त्यादौ तद्घटकत्वातिदेशेपिनतदनधिकरणत्वरूपमिवर्णान्तत्वमायातीतिनातिव्याप्तिः । इरियानित्यादौ तदादित्वानतिदेशेपि स्थानिवद्भावेनतद्धितान्तत्वमानेयम् । अतएवनप्रत्ययमात्रस्य तदन्ततांत्र मइति दीक्षितग्रन्थसङ्गतिःनचास्यापत्यमिति विग्रहअअणित्यवस्थायांप्रत्ययमात्रस्य प्रातिपदिकत्वापत्तिरिष्टापत्तेः । नचौपगवेत्येकदेशाकारस्यापि प्रातिपदिकत्वापत्तिः वृक्षप्रचलनन्यायेनादोषादिति निर्दुष्टःपंथाः । नञस्नञी । पुनरत्रेति । नचवयोवाचिनां वैकल्पिकजातिकार्यत्वाद्पुंयोगेरूपद्वयंसिद्धंपुंयोगेवयस्यचरमइति बाधित्वापुंयोगादाख्यायामिति ङीषेवस्यादिति वार्तिकंतत्कृतेपि वार्तिकेनङीषंबाधित्वाङीवेवस्यादिति गौरादिपाठः । तत्सामर्थ्यात्पक्षेङीष्इति रूपद्वयसिद्धं तत्बह्वादिषु पाठः कार्यःकिंवामनोरौवेत्यनन्तरंवार्तिकंकार्यंतेनसर्वत्ररूपद्वयेसिद्धेगौरादिपाठः किमर्थंइति वाच्यम् । एवंसिद्धएवंक्रियमाणेन वैकल्पिकंजातिकार्यस्यानित्यत्वं बोध्यते तस्माच्चबह्वादिपाठस्यापुंयोगेचारितार्थ्यंपुंयोगेपरत्वान्ङीषेवस्यादेवं मनोरौवेत्युक्तेरनन्तरंपाठेपि पुंयोगेचारितार्थ्येनापुंयोगेङीषएवस्यात् तस्माद्गौरादिपाठः । वार्तिकंचेतिबहवोऽनित्यत्वफलन्तु वृद्धास्थविरेत्यत्रनैवङीष् अत्रैवब्रूमः तरूणीसुरेत्यत्रवयोवाचकत्वाभावादप्राप्तेङीबर्थं-वार्तिकं तत्रापुंयोगेवैकल्पिकजातिकार्यत्वेन रूपद्वयेपि परत्वात्पुंयोगेङीषेवस्याद्वार्तिकंत्वत्रचरितार्थमिति पुंयोगेङीष्घटित-

मेकमेवरूपं स्यादिति सिद्धमिष्टंगौरादिपाठश्चव्यर्थोऽत्रवि-
चारयन्तुसुधियः । वार्तिकस्यान्यार्थतापत्तेश्चेत्यर्थः । तत्रेकगि
तिह्रस्वः पाठःशक्तिषष्टयोरिकगेवविधेयः विधानसामर्थ्यान्नय-
स्येतिलोपः । अन्यथाकगमेवविदध्याद् वहिषष्टिलोपइत्यत्र-
वहिषः षलोपोऽश्चइकगिति पाठ्यन्तेननदोषोविधानसाम-
र्थ्यान्नलोपइति चेन्न । तीयादिककितृतीयीकासिद्धेः नचतत्र-
दीर्घोत्रैव ह्रस्वःतार्तीयीकीत्यसिद्धेः । प्राचांष्फ । ननुष्फङेवविधेयः
किन्तद्धितग्रहणेनङित्वसामर्थ्यादासुरेरुपसंख्यानमिति
सिद्धमिति चेन्न । संहितापाठेङिदपि संभाव्येतकिञ्चतस्यार्द्ध-
मात्रिकत्वेनाऽविशेषात् किञ्चगौकक्ष्याशब्दाद्गर्गादियञन्त-
प्रकृतिकक्रौड्यादियङ्ङन्तप्रकृतिकचाबन्तात्तद्विवक्षायाम्भस्या
ढइति पुंवत्वार्थन्तस्याऽऽवश्यकत्वात् । नचभाष्येतत्प्रत्याख्या-
तमिति वाच्यं तद्दस्यापिकृतप्रायत्वात् प्रत्याख्यानेषाद्यञइति
चापिगौकक्षातस्मातृष्फइति सिद्धागौकक्ष्यायणीनचगौकक्ष्या
इति स्यात् ष्फस्यचापोऽपवादकत्वादिति वाच्यं प्राचांष्फइ-
त्यत्रसर्वत्रग्रहाऽनुवृत्तिस्तच्चबाधकविषयेपि प्रवृत्त्यर्थंगौकक्ष्याइ-
ति तूदीचांमतएवञ्चगौकक्ष्यायाः प्रतिषेधोवक्तव्यइति स-
म्प्रसारणनिषेधकं वार्तिकमपिनारम्भणीयमित्यपरमनुकूलं ।
टिड्ढाण । टिदाद्यवयवेति नचटिदाद्यवयवोकारइत्युक्तेकारस्य
प्रत्ययत्वात्तदन्तग्रहणाऽभावेन प्रातिपदिकविशेषणेनैव तदन्त
विधौपरमकुरुचरीति नस्यादिति वाच्यम् एकस्मिन्नपितदन्त-
विधौटिदाद्यवयवाऽकारान्तत्वस्य प्रत्ययाप्रत्ययग्रहणेप्रत्ययग्र-
हणइत्यस्याऽप्रवृत्त्यासमुदायेपि सत्वात् । नचैवंवहुकुरुचरेत्य-

त्रापि वारणार्थमनुपसर्जनाऽधिकारस्य चारितार्थ्येनज्ञापकताऽसम्भवइति वाच्यं टिदित्यादिप्रत्ययग्रहणेनतदन्तग्रहणेन टिदन्तमित्यर्थात्समुदायेतदभावेनाचारितार्थ्यात् टिदाद्यवयवाकारान्तमित्युक्तेतुपरिभाषाबाधः स्यात् । तथाच टिदन्तांतंयदकारान्तमित्युक्तेपञ्चाश्वेति प्रत्ययाऽकारष्टिदाद्यवयवोग्राह्य इत्याकलनीयंपरेत्विति नचक्वचिदनल्विधाविति निषेधइत्यस्याऽभावेन चक्राणइत्यत्रस्थानिवत्त्वेनटित्वाट्टेरेत्वंस्यादिति वाच्यम् । टितइत्यत्रतङामित्यनुवर्तते टिदतस्तङांटेरइति न्यासेनवाऽदोषात् नचङिदादेशानांनङित्त्वमित्यस्याभावेलविषीष्टेत्यत्रगुणोनस्यादिति वाच्यं लिङ्सिचाविति‌क्ङितिकित्त्वविधानाज्ज्ञापकात् क्वचिन्नङिदादेशानांङित्त्वमित्युच्यमानत्वात् । हलउपधायाइति नचसामर्थ्याद्व्यवधानेपि भवतिगार्ग्यायणीत्यत्रतुयेननेति न्यायेननदोषइति वाच्यम् । उपधापदानुवृत्तेर्वचनकल्पनापेक्षयालघीयस्त्वात् । षः । आदिरुपरञ्जकेति । अविमह्योष्टिषजित्वादावनायासतोवारकतयेतिकेचित् । नादेशाइति नचेत्संज्ञाभवतुलोपंबाधित्वाऽऽदेशःस्यादेवेति वाच्यम् । इदितिमहासंज्ञयालोपंविनासंज्ञाऽप्रवृत्तेः सर्वत्रसर्वेषामिति फलितार्थः सप्तम्याश्चलुत्पत्तेः । आवट्यायनीति प्राचांष्फस्तद्धितः सर्वत्रेतिन्यासेनसिद्धम् । एतेनापकर्षःपरास्त अत्र ... । वाथ्र्यादुत्तरत्रेहवेतिनित्यत्वफलन्तु वृद्धास्थविरेत्यत्रनैवङीष् अप्राप्तइति । तरुणीसुरेत्यत्रवयोवाचकत्वाभावादप्राप्तेङीवर्थंचर्येणगोत्राणांत्रंमात्रस्यग्रहणन तत्कार्यत्वेन रूपद्वयेपि परत्वाति सुधियः । विभाषा । वहनोवृषलपतेयईति तु येषोलप्रयोजना-

दनुपसर्जनादिति ज्ञापनाऽसंगतिरत्रैवकर्त्तव्येतत्वकरणात् । नचात्रविशिष्टस्याऽनुपसर्जनत्वमेव सपूर्वपति शब्दत्वाभावात् । पतिशब्देसमासकालेवहुवृषलेत्यस्याऽनवयवत्वात् तदन्तस्येतिनासूत्रिमूलोक्तेदोषात् समासस्येति तुनासूत्रिबहुत्त्पूर्वेऽनापत्ते र्बहुवृषलपत्नीतुनदोषः प्रत्यासत्त्यापतिशब्देन केवलेनजातस्यसमासस्यानुपसर्जनस्यग्रहणात् । वृत्तेरितितुनोक्तंपतिरिवमनुष्यापतिरित्यत्रापत्तेः व्यपदेशिवत्त्वेन सपूर्वत्वात् सपूर्वग्रहणन्तु वृत्त्यभावेचरितार्थंत्रीण्येति कुम्भकपाललोहिनीत्यत्रनप्राप्नोत्यतइयं व्याख्यागृह्यमाणविशेषणमिति त्रिष्वेनीत्यर्थोबोध्यः सपत्नीति निपातात् स्त्रीविशेषएवेत्यर्थः । सूर्य । सूर्यादीनामङ्गानामित्यर्थेसौरोनस्यात् । यग्रहणमिति । सूर्यमानयतीति सूर्याणीत्यत्रैकादेशअकारस्य सूर्यसम्बन्धित्वादुपधात्वाच्चलोपः स्यादित्यावश्यकमिति केचित् । उपधात्वाभावान्नेत्यपरउपमिति विसारिणोमत्स्यइति निर्देशोऽसंदेहायङाबित्येववक्तव्यत्वाद्वासप्तम्याअग्रहणंनक्षत्रवाचकादिति व्यावर्त्यन्तु तिष्यसंज्ञकपुरुषस्येदन्तैष्यमित्याहुः दंष्ट्राइत्यस्याजादौ पाठः । अपरइति । कमण्डलाविति मेदिन्यापिठरेत्विति पिठरतिति कोशस्यसंकोचेनानुगतत्वाज्जातित्वमित्याशयः वस्तुतएकेन्दटेङोणकोशद्वयसङ्कोचस्यानुचितत्वात कोशद्वयेतर्हिकमण्ड-प्रत्ययत्वात्तदन्त[illegible]इणाऽभावेन प्रातिपदिकविशेषणेनैमान्यविधौपरमकुरुचरीति नस्यादिति वाच्यम् एकस्मिन्नपि नियविधौटिदाद्यवयवाऽकारान्तेनेत्यत्रप्रातिपदिकस्येति बोध्यम् । नतागु । सत्वस्थस्वस्थ्यपति पृथगिति । अभावेऽतिव्याप्तेः

सत्वेनिविशतइति । जातावतिव्याप्तेरपैतीति । आत्मनिष्ट-धर्मेति व्याप्तेःपृथगिति । आश्रयेऽतिव्याप्तेरक्रियाजइति क्रियानामकृतिसाध्याजन्यस्य क्रियात्वात्तस्यचनिषेधोऽत्रेदं वोध्यं मानेनगुणलक्षणमभिहितमाकडाराइत्यत्रभाष्येतुगुणवचनलक्षणमभिहितमेवंचविरोधाभावाद्दृढविशेषणसार्थक्याद्भाष्यं-सुयोजमित्येकदेश्युक्तित्वं चिन्त्यंस्पष्टंचेदं शब्दरत्नेशुचिशब्दे-कृदिकारादिति स्यादित्याह । शुक्लेति । नच संयोगोपध-त्वेननिषेधः खरुसाहचर्येण संयोगोपधेति निषेधोऽप्युकारान्त-स्यैवेत्याशयात् । वस्तुतःश्यामेत्युदाहरणीयं । प्रियकतिरिति । नषदस्वस्रादिभ्यइत्यस्य स्त्रियांयत्प्राप्नोतीति व्याख्यानेना-त्राऽपि निषेधइदंफलंचिन्त्यंसुगन्धिरितितुफलम् । पुराणशब्द स्याण्णन्तत्वमितिङीप्ङोषःस्वरेविशेषाभावइत्युक्तम् । पुंयो । स्त्रियांवर्तमानस्येति । पुंस्येवेति । नचज्येष्ठाकनिष्ठेत्यजादिनि-पातनंव्यर्थंङीषोऽप्राप्तेः पुंस्येवविद्यमानत्वाभावादित्येवस्या-प्रयोजकत्वादतएव शुक्लोतिपुंयोगेसिद्धः । महद्धिममिति । नच स्वार्थेपरिपूर्णंपदार्थान्तरमाकाङ्क्षतइति न्यायेनसुबुत्प-त्यनन्तरं महत्वविवक्षायांङीब्जायमानः सुबन्तात्स्यादिति वाच्यं प्रातिपदिकादित्यधिकारेण तदव्यवहितोत्पत्त्यासुबन्ते पि तदभावात् वह्वितेतुप्रातिपदिकप्रकृतिकेलक्षणयासुबन्ता देवोत्पत्तिरिति ज्ञेयंयवनाल्लिप्यां यवनशब्दस्य यवनलिपेरौप-चारिकत्वेनतस्येदमित्यणोप्राप्त्यातत्रैतस्य चारितार्थ्येनयवना नांलिपिरित्यत्राणबाधकः परत्वात्स्यादिति बोध्यम् । एवंचा-णबाधकोङीबिति वहवणग्रन्थाश्चिन्त्याः अयंपुंयोगेपि ङी-

प्कालीत्यत्रनजानपदेति सूत्रेवर्णग्रहणादन्यथावर्णादिति सूत्रेकालादित्युक्त्यावर्णएवतादृशरूपसिद्धेः नन्वतेनङीब्भवतीत्यनुदात्तःस्यात् वाच्यम् । कालशब्दस्यान्तोदात्तत्वेनोदात्तस्वरेण ङीष्ङीपोःस्वरे विशेषाभावात् । यदितुवर्णग्रहणंमात्रागौरवात्पदगौरवमिति ज्ञापकतयाचरितार्थमित्युच्यते तदापुंयोगेङीषिष्टएवेति बोध्यम् । अंबांवेति । नचपदादादिरित्यर्थेगोस्थइत्यत्रसुबुत्पत्तेः पूर्वंसमासेपि निषेधप्रवृत्त्याषत्वार्थमावश्यकमिति वाच्यम् । पदस्यादिरित्यभिप्रेत्यप्रवृत्तत्वेनाऽस्यचिन्त्यत्वात् । एवञ्चनियमार्थत्वमप्रयुक्तम् । हृदिस्थइत्यपिपदादिरिति विग्रहेणैवसिद्धमितिज्ञेयम् । अस्वाङ्ग । अस्वाङ्गादिति बहुव्रीहिविशेषणेपि नस्वाऽङ्गंयत्रेतिविग्रहेण सुरापीतीत्यादिसिद्धौदोषाभावेन पूर्वग्रहणंस्पष्टार्थमेवेति वाच्यम् । उत्तरसूत्रेनस्वाङ्गं यत्रेतिकर्तुमशक्यत्वेन स्वाङ्गाभिन्नात्पूर्वपदात्परं यत्स्वाङ्गन्तदन्तादनुपसर्जनादित्यर्थेकल्याणपाणिपादेत्यत्रापत्तिः स्यात् पूर्वपदग्रहणेतु यत्स्वाङ्गंनतत्पूर्वपदंयच्चपूर्वपदं नतत्स्वाङ्गमित्यदोषइति बोध्यम् । स्वाङ्गाच्चो । एकविभक्तीति शास्त्रीयमुपसर्जनमेवग्राह्यम् । अतएवापराश्चतेकेशाश्च अपरकेशा आईषदपरकेशाइति विग्रहआपरकेशीत्यत्रपरादिवद्भावेन आपरेति पूर्वपदन्तस्मात्परं स्वाङ्गंकेशेति शास्त्रीयोपसर्जनकमिति ङीब्भवतिलौकिकाऽप्रधानत्वग्रहणेतु तत्तदभावेनङीष्नस्यादिति कृत्रिमन्यायेनशास्त्रीयस्यैव ग्रहणमुचितमिति बोध्यम् । एवञ्चाऽप्रधानत्वंचेति ग्रन्थश्चिन्त्यःसमुच्चयार्थंवेति सुधियः । शिखेतिप्रत्युदाहरणमिति । नचोपस-

र्जनादित्यस्याऽभावेबहुव्रोहेरित्यनुपसर्ज्जनादित्युभयमपि प्राप्त न्तत्राऽनुपसर्जनादिति सम्बन्धेसुशिखेत्यत्रटापं बाधित्वाङी-नुपसञ्जनिष्यैति न्यायेनेतिसम्यगेवग्रन्थः अशिखेत्यत्रापि न-सहनञितिनिषेधोऽस्यशिखेत्येवं भाष्याऽभिप्रायादिति वा-च्यम् । अतइत्यनुवृत्तौशिखेत्यत्रटापं बाधित्वाङीप्स्यान्नतु-सुशिखेत्यत्रोपसञ्जनिष्यन्यायस्यसामर्थ्यमूलकत्वात् शिखेत्य-त्वचारितार्थ्यादित्येतद्ग्रन्थसङ्गतिरिति कश्चित् वस्तुतउपसञ्ज-निष्यन्यायस्याऽपि प्रवृत्तिरिति सम्यगेवमूलाभिमतम् । जाते-र । देवदत्तेऽति व्याप्तेःसमानकालिकाऽनेकव्यक्तिवृत्त्यनुग-तसंस्थानव्यंग्येति तत्र समानकालिकेतिविशेषणंव्यर्थमनेक-वृत्तीत्यनेनैवगतार्थत्वात् गोत्रञ्चेति शास्त्रीयमौपगवीभा-र्येपुंवत्वनिषेधोनप्राप्नोतीति नचाऽत्राऽपि शास्त्रीयंगोत्रंवर्त-तइति वाच्यम् एतद्भाष्यप्रामाण्याद्विशेष्येतस्यशंवदद्रव्यपरि-माणमित्यत्रपरिमाणपदंव्यर्थंव्यावर्त्याऽलाभाल्लक्षणयागो-त्रस्य विवक्षितत्वात् परेत्विति । प्रथमपक्षउपदेशान्तर्गतत्वेना कृत्याश्रयान्यतरोपदेशव्यंग्यायद्वापक्षआकृतिग्रहणोपदेशव्यं-ग्याचेत्यर्थः । अत्रेदन्तत्वम् । औपगवीभार्येनदोषः युवप्रत्यय-लक्षणेन गोत्रत्वंन प्रत्ययाप्रत्ययसाधारणत्वात् किञ्चाऽणि-जातित्वं पूर्वंकृत्वेदानींप्रत्ययलक्षणेन जातित्वाभावात् तस्या-पिसाधारणत्वात् किञ्चतावन्मात्रेजातित्वेपि ततःपरस्त्रीप्र-त्ययाऽभावेनजातित्वाऽभावः । किञ्चाल्विधित्वेन पूर्वभा-ष्येलग्नेलौकिकगोत्राऽश्रयणमनुचितम् । नापिब्राह्मोनारदइ-त्यसिद्धिः तत्र जातिपदेनाऽऽकृतिइति लक्षणकस्यघटत्वेस्या-

दिलौकिकस्यवाग्रहणादतएव ब्राह्मएवणइति सिद्धिरन्यथा-
तत्रगोत्रत्वेन जातित्वाद्दोषःस्यात् । एवञ्चावन्तिरितिभाष्य-
मप्यनुकूलमिति तत्वविदोत्रेदम्बोध्यम् । तटंलिष्वितिको-
शस्यप्रामादिकत्वमनुचितम् । किञ्चकस्यलिङ्गस्यत्याग [illegible] ति
विनिगमनाऽभावः जातेराविष्ट [illegible] भावस्याऽपि आवि
ष्टम् स्वतएवनाऽन्यतोलिङ्गं [illegible]
त्वेऽपि नदोषःशुक्लादौत्वाश्रयव्यक्ति
असर्वलिङ्गमित्यस्यापि सर्वेषांयानि
ववान् किन्तु स्वाश्रयमात्रलिङ्गवतीत्यर्थेन
ह्वित्वनिर्देशोऽपि कुमारशब्दविषयइति नदोष.
कृतोति लिङ्गानांचेतिद्वयमेवेति नदोषः एवञ्चगोत्रञ्चत्य-
स्यसाहचर्य्येणसंज्ञात्वमेवातिदेशेमानाऽभावात् । स्पष्टैवेति
महाशुद्रीति भाष्यमेकदेश्युक्तिः । वहूनामजादिपाठाद्द्रोणी-
कुटीत्यादयोगौरादिषु बोध्याः ॥ उरू ॥ उपमानशब्देन सादृ-
श्येप्रतीतेतस्मात्स्वार्थेष्यञ् सादृश्यविशिष्टपूर्वपदाक्षेपायेक्षया
केवलपूर्वपदमाक्षिप्यौपम्यइति विशेषणतेनकरभोपमोरुरित्य-
त्रदोषइति चिन्त्यम् ।

इति सदाशिवभट्टाम् स्त्रीप्रत्ययाः समाप्ताः ।

समाप्तम् ।